श्रीशारदाम्बा विजयतेतराम्.

# पर्य्यटनमीमांसा

श्रीमत्परमहंसपरिव्राजकाचार्य्यवर्य्यजगद्गुरुश्री-
मच्छङ्कराचार्य्यश्रीशारदापीठद्वारकासं-
स्थानाधीश्वरश्रीमद्राजराजेश्वर-
शङ्कराश्रमस्वामिनां कृति-
रेषा जागर्तितराम्.





मुंबय्यां निर्णयसागराख्यमुद्रणालये मुद्रापितम्.





संवत् १९४७.

जयतिभगवान् हरिणाङ्कचूडामणिः

# पर्य्यटनमीमांसा-



प्राहुर्य्यस्य प्रदीप्तिं हुतवहरविसोमादिरोचिःप्रकीर्त्तिं
ज्ञानञ्चाचेतनात्मत्रिभुवननिबिडध्वान्तमोहापहानम् ।
सत्यं तत्तुच्छभानापगमपरिचितेर्नेतृकं वेदवाच-
स्तं वन्दे सर्वभावैरतुलितकरुणानीरधिं ब्रह्म साम्बम् ॥१॥

यदीयाभिर्ज्ञानाद्यभिमतकलाभिश्च तिसृभि-
र्विचित्रं विश्वं नोऽनुभवपरिपाटीपथगतम् ।
तदप्याम्नायाद्यैर्विहितबहुविन्यासभणितं
तथाप्यस्मादेव व्यवहितगतौ नैव गरिमा ॥ २ ॥

आशास्वद्य महेशभूरिमहिमप्रद्योतितासु स्वयं
खण्डेऽस्मिन्नुपमानहीनसुभगेप्यालक्ष्यतेदभ्रता ।
औन्नत्यस्य महाविभूतिनिलयानामप्यतो दन्तुरां
चर्य्यां वीक्ष्य विलोपने बहुविदो धर्म्मस्य मुह्यन्ति नः ॥३॥

तस्मादस्मत्प्रकृतिविशदं धर्म्मतन्त्रं प्रकृत्य
प्रायो वेदं तदनु विमलान्यार्षवाक्यानि शश्वत् ।
आस्थायेदं प्रकरणमथोप्याङ्गलादिप्रभिन्न-
द्वीपोद्युक्तानपि करुणया वक्ति किञ्चिन्निगूढम् ॥ ४ ॥

इह खलु ब्राह्मणादीनां प्रत्यासन्नसमारम्भसंसाधनैकनिकामानां प्रस्तुते हि गम्यागम्यदेशविशेषविमर्शादिप्रस्तावे किं सर्वे सर्वदैव गमनयोग्या उत समयभेदेन तदेकदेशा वा तदनर्हतायां के वा नियन्तारो विशेषहेतवः सामान्या वा के च तत्प्रयोजकाः किं तत्र प्रमाणं मर्य्यादासमभ्यक्तक्षेमङ्करार्थपर्य्याप्तमथ यथावदसम्प्रतिपत्तौ तथाविधप्रवर्त्तनापरिचोद्यमानास्तद्विपर्य्ययप्रचारप्रचुरैः स्वजातीयैः संव्यवहार्य्या भवेयुर्नवा इत्याद्याः प्रवर्त्तन्ते जिज्ञासाः ।

ननु तत्र "सवै भूमेरजायत तस्माद्भूमिरजायत । धातायथापूर्वमकल्पयद्दिवंचपृथिवीञ्चे" त्याथर्वणबह्वृचश्रुतिभ्यां नियन्तुर्महेश्वरस्यासजातीयसिसृक्षासम्वलितत्वाभावस्य प्रमाणसामान्यगम्यत्वात्तदायत्तमहीमण्डलभेदानामविभिन्नमानास्पदतया प्रक्रमातिशयसमाहारनिर्वाहकतया च वैषम्यापादकप्रवृत्तिममताया मानहीनत्वान्मतिमद्विचारपदवीबाह्यत्वाच्च त्रैकालिकप्रवासविषययावद्देशसङ्कोचविकासप्रत्ययधाराया अयुक्तत्वमितिचेदुच्यते जीमूतैकनिदानवारिधारास्वरसवाहिप्रवृत्तेरविरूपत्वेपि सङ्किरद्धाराधिष्ठानधरित्रीकर्षणबीजविशेषाद्यसाधारणकारणप्रयोज्यसस्यादिसमृद्धेरितरेतररसवीर्य्यविपाकवैलक्षण्योपलक्षितायाः समस्तानुभवसिद्धायाः सम्भावनीयत्ववदत्रापि विश्वसाधारणकारणमहेश्वराभिगाम्यनुभवानुविधाय्यसाधारणकारणानुकार्य्युर्व्वीमण्डलव्यवस्थायाः परस्परपरिभाषासमवसितायाः "प्रजा ह तिस्रो अत्यायमीयुः अथरमणीयचरणा अभ्याशोहयत्ते रमणीयां योनिमाप-

द्यन्ते अथकपूयचरणा अभ्याशोहयत्ते कपूयांयोनिमापद्यन्त" इति ऋक्सामयोरर्थानुसन्धानमहिम्ना स्वरूपतः पर्य्यालोचनीयत्वात् तद्वर्गीणान्योन्यव्यवहितस्वरूपाधीनविग्रहवत्त्वादितरेतरप्रकृत्याकृतिचेष्टितानामनुभाव्यत्वमध्यवसीयमानं सन्मतिमद्विचारणासमारूढमवगम्यते । ततः पारम्परिकवैषम्यसम्भावनाया वस्तुस्थित्यनुविधायितया न तद्गोचरममताया वैफल्यगन्धः कदाचित् ततश्च प्रवासविषयदेशविशेषसङ्कोचविकासानुकूलप्रत्ययधारायास्सर्वदैव योग्यता सुगमा । न च समास्वादनार्हनानाप्रक्रमप्रयुक्तेः प्रेक्षावदभ्यर्हिततराया व्यावहारिकक्रियानिष्पादनैकरूपायास्तथा सत्यसङ्गतत्वमेवेति वाच्यम् महोद्यमामोदस्य सम्मततरत्वेपि तत्परीतोदितान्तरायजालस्याभ्यर्हिततरा पूर्वविघटनाधीनस्य दुराधर्षणीयत्वात्तारतम्यविमर्शतोवाऽऽभ्युदयिकानुवृत्तेः परिनिष्ठितत्वाच्च ।

ननु देशानामेकदेशानीयोमोक्तदिशाभिगम्यताचिन्तायामपि यस्मै यदर्थप्रारीप्सापरिप्रेरिततया रोचते यो देशः सएव तस्याभिगम्यो विनिगमकान्तरस्याकिञ्चित्करत्वादुत यथाकथञ्चित्कतिपयविचारकसमयग्रहाधीनपरिलिखितदेशएववाऽऽहोस्विच्छास्त्रस्थपरिसङ्ख्यानगोचर इति । नाद्यः सर्वेण सर्वस्य गम्यत्वापत्तेः न चेष्टापत्तिः शक्याद्यादतुम् अनवस्थापातस्यैच्छिकाचारचर्वणालम्बिव्यग्रतानिकारस्य निह्नवैकयोग्यत्वात् । न द्वितीयः परिच्छिन्नविचारकोद्दिष्टप्रमेयविशेषस्य विचारकान्तरेणाभासीकरणप्रवादगोचरत्वात् ।

नच तत्रातीतानागतादिपरीक्षकसमाहारसम्भवो न क्वचिदप्यधिकरणे येनैकत्वमध्यवसीयेतेतिवाच्यम् अभियुक्ततमसम्वित्प्रकाण्डस्य निदाघमार्त्तण्डपरप्रभाप्रस्थानतया वनसिंहन्यायोपजीवितत्वेन समस्ताभिभावकतायाः सम्प्रतिपन्नत्वात् तथात्वेनैव महामहामीमांसाया विशिष्टप्रचारसाक्षिकत्वाच्च ।

यद्यपीष्यत एवात्र तृतीयः परमत्र विवेक्तव्याः शास्त्रस्थाः तत्तद्वर्गीणवैदुष्योत्कर्षापकर्षभावसम्भावितानामप्यतिशयितकला-कलापयोगमाहात्म्यैस्त्रिलोकीपरिभ्रामितकीर्तिजालाः परिगृह्यन्ते महर्षयः नत्ववाचीनाः प्राचीनावाङ्गेयैकदेशविचारचातुरीसं-भ्रान्तधीविलासा विगीतप्रचारपराहतपरार्थशेमुषीकाः सम्मा-न्यन्ते भरतखण्डबहिर्भूता अप्यत्र विचारकम्मन्याः विचारो वाऽमीषां भरतवर्षनिरवद्यविद्याव्यवहारपरिपाटीसम्प्रसारणप्राणः प्रतीयते । भूतपूर्वप्रतिभाऽनधीनप्रतिभोद्गमोहि तेषां प्रत्ययवै-लक्षण्यादनीदृगाभासभासुरोपि पुरा भरतवर्षसंस्तवसंराधना-भ्यामभूतपूर्वएव कार्य्यप्रत्यासत्त्याऽवसीयते । यदि तं प्रधानत-न्त्रेषु प्रामाणिकनिबन्धेभ्यः प्राक्ताभ्यामभ्युपगच्छेमांशतस्तर्ह्य-परप्रयुक्ततत्पाटवमादरगोचरं ब्रूयाम । नचैवं किञ्चन तादृक्प्र-तीत्याधायकमनपनोद्यक्रियाविशेषवासितमधिगच्छामो यतो विप-र्ययग्रहग्राह्यकिञ्चनपरिधानादिप्रक्रियायाः काननागारनरनिकर-वेषभाषापरिपोषसमास्कन्दितायाः प्रतिप्रकरणमवधारणीयता । संस्तवातिशयवतापि पुस्तभारेभ्यः शैक्षवैखरीप्रत्याकूतसंशील-नेभ्यो गभीरभावातिभारसौरभमापाततो वा प्रशंस्यते तारतम्य-चर्चायां जातुचित् । अनुमोद्यमानं वा मोमुह्यमानमतिप्रचारच-ञ्चरीकनिस्स्वनैकनिदर्शनमेव सदसम्पन्नसामग्रीकतया न कस्या-श्चिद्रसव्यक्तेः साधनायालम् । अर्थतः सामीप्यसारूप्यकथातु क-थैव केवलमकथकपरिषद्दाक्षिण्यकृते संक्षेपविस्तराभ्यामित्यविसं-वादिन्येवार्थावगतिः । आगमिकी वा तेषामिहत्यवैतानिकनरनि-वहातिपातिवैकृतिकाख्यानप्रख्यापनैकनिरतेभ्यः प्राकृतजनतामा-त्रसंमाननीयेभ्योऽर्थान्नातिशेत एव शैली समन्ततः प्रत्युत ततोपि प्रहीणलावण्यकारुण्यस्वरसमैत्रीका रजश्चेष्टासमाच्छन्नक्रियावाहा निधनभावानुनीतसत्त्वमहाप्रस्थाना एव परम्प्रतीयन्ते । नचैष

गुणग्रामः परत्रापि संक्लृप्तव्यवस्थाकतयैहिकाखण्डलैरप्युन्नेतुमनर्ह इति शक्यमभिधातुम् योयन्निरूपितसांसिद्धिकप्रकाराक्रान्तः सतन्निरूपिततज्जातीयविशेषणानधीनविशेषणासन्तानक इति न्यायानुकार्य्यनियत्ताकनिदर्शनानामागोपालाविपालप्रथितानामप्रत्यूहमभिनिष्पत्तेः । नह्यन्यथानुमानमुदितानुभूतिपराभूतिप्रभवमभियुक्ततराकलितम्वा तात्विकप्रत्यक्षमर्य्यादातिशायित्वात् । एवञ्च प्रमाणगणैरवधार्य्यमाणप्रतिष्ठिततमसमारम्भवरूथे हि भरतवर्षे सिद्धे तदौन्नत्यनियन्तृषिप्रणालीसमुद्दीव्यदनन्तप्रबन्धराद्धान्तितार्थविशेषा एवार्हन्ति प्रमाणभूमिकां यतः शब्दार्थस्थितिष्वृषीणामेवाभियुक्तत्वे विहङ्गमादीनां बन्धनभेदनादावन्येषां द्वीपान्तराधिष्ठितमानवानामभियुक्ततरत्वमानुभविकम् । ये यदायत्ताभियुक्तभावभाजनं ते तदास्पदादेशधाटीपरीरम्भभविष्णव एवेति तद्बन्धनादि परिस्पन्दनोपसर्जनसन्धानान्नातिवर्त्तेरन् तदनुकरणवन्तोऽपि रूपान्तरानापन्नाः सर्वत्रेति परोऽविमर्शः । तथाच शिष्टपदाभिधेयापरपर्य्यायमहर्षिपरिसंख्यानप्रक्रियायां मूलीभूताम्नायप्रघट्टिका एव संघटिकाः उत्सन्नानुत्सन्नतद्वाक्यार्थस्मर्तृत्वेन महर्षीणामेवाधिकृतत्त्वात् । यथाहुः "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति । नर्ते तानितरत्र वा तत्परम्पराकेषु तथाविधाभियुक्ततानभ्युपगमे ततः परं बाह्यतरेषु द्वीपान्तरभवन्मानवेषु तद्ग्रन्थसम्भव इति व्यक्ततरम् तदीयपरिनिष्ठितप्रमाणैरभिगम्यत्वानभिगम्यत्वयोर्विवेचयिष्यमाणयोः सार्वदेशिकैकदेशिकाभिगम्यत्वस्यापि तथात्वात् । परिशिष्टजिज्ञासानामपि तत्तुल्यप्रत्यासत्त्यैवावधारयिष्यमाणत्वात् ।

प्रकृते च ब्राह्मणादीनां भरतवर्षबाह्यभागाभिगमनमतिकारुणिकश्रुतिस्मृतीतिहासेभ्यः प्रतिषेधगोचरः प्रतीयते भारतवर्षेपि नि-

मित्तान्यनुसन्दधानाः प्रान्तविशेषविषयप्रवासनिषेधं वर्णयाम्बभूवुः देशानां गम्यत्वागम्यत्वचिन्तायामभ्युदयनिःश्रेयसोपायानुष्ठानानपहान्यपहान्योः प्रयोजकता तदनुष्ठात्रधिकारिजनसाङ्गत्याभावस्तद्वियोजकमानवमहामण्डलीसमागमपरीतता उद्वृत्ततप्राग्भारश्च ततश्चिरन्तनसंप्रदायोच्छेदएव चरमापूर्वं तस्यापतेत् एवमाद्यमितसदर्थसंलोपविपत्तिपर्य्यालोचनया गम्यागम्यविचारणाहि प्रमाणपीठमधितिष्ठत्येव प्रतियोग्यभावस्वरूपव्यवस्थितमर्य्यादामुद्रया । तथाहि "सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति १ सौराष्ट्रसिन्धुसौवीरानवन्तीदक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनः संस्कारमर्हती" ति स्मरणानि भरतवर्षान्तःपातिनामपि सिन्ध्वादीनामगम्यत्वं गमनप्रसक्तौ प्रायश्चित्तार्हताञ्चोद्बोधयन्त्युन्मार्गवर्त्तनायत्तप्रत्ययभेदानेव लक्षीकुर्वन्ति यद्यप्येते देशाः समध्याचार्य्यावर्त्तपदवाच्यतां भजमानाः संपद्यन्ते विशिष्टगम्यत्वमेवाविशेषतस्तथाप्यार्य्याभासयवनादिजातीयाभ्यामभिभूतसदाचारप्रचारतया तावन्मात्रप्रधानपरिदृष्ट्याऽनभिगम्यत्वगन्तृगामिप्रायश्चित्तीयत्वे व्यवस्थापिते तदादिजनसङ्गसाङ्गत्यादेः समयभेदेन वा श्रौतवर्त्मपरिमार्जनैकपर्य्यवसायित्वसमीक्षावद्भिरभियुक्तैः । तथा च निजधर्म्मसङ्गोपनानुकूलक्रियामात्रनिर्वर्त्तने तन्ममतातिशयस्तदुत्सादनोत्सर्पदुत्पादनास्वत्यश्चदुच्चावचचिन्तनावतस्ताभ्यो वियोजयितुमेवाहन्ताभरस्तदीयोऽनुभूयते । ननु ते नीरसदुराग्रहफलेग्राहिणो मत्सरपित्ताम्भःपरिक्लेदितान्तःसम्भारा वा जातुचित् मृष्यामहे च साधुचर्य्याऽऽचरणप्रचारणामात्रस्वार्थेष्वकिञ्चनमनोवीचीसमुद्भावितान्यथाभावमभियुक्तप्रथितानुभावासहमानं तेषु तराम् । एवञ्च कैमुतिकन्यायेन भरतवर्षबहिर्भाविविषयविशेषावलम्बिप्रवासप्रतिषेधगोचरगिरां हि तेषामुदीरितमहत्त्वासन्ततानुसन्धानधा-

राभिरबाधितार्थविषयतयैव न्याय्या। तथा चाहुः "आसमुद्राच्च पूर्वाद्वा आसमुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः। पश्चात्सिन्धुर्विहरणी सूर्यस्योदयनं पुरा। यावत्कृष्णा विधावन्ति तावद्वै ब्रह्मवर्चस" मिति भाल्लवेयाः। अपि च "म्लेच्छदेशे तथा रात्रौ सन्ध्ययोश्च विशेषतः। न श्राद्धमाचरेत्प्राज्ञो म्लेच्छदेशे न च व्रजेत् १ न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकम् २ म्लेच्छावासस्तथा पक्षं यो वर्त्तेत स पातकी ३ न म्लेच्छविषये श्राद्धं कुर्यात् ४ न गच्छेन्म्लेच्छविषयम् ५" यत्र पानमपेयस्य देशेऽभक्ष्यस्य भक्षणम्। अगम्यागामिता यत्र तं देशं परिवर्जयेत्। परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छति। "समुद्रयायी कृतहा रथ्यासमयभेदकः। वेदनिन्दारतश्चैव देवनिन्दारतस्तथा। द्विजनिन्दारतश्चैव ते वर्ज्याः श्राद्धकर्मस्वि" त्याचक्षाणैर्भगवद्भिर्विष्णुशङ्खौशनःपराशरवसिष्ठमरीचिभिर्म्लेच्छदेशे पर्यटनश्राद्धक्रियानिष्पादनतत्रत्यजलाशयानन्यगतिकपानावगाहनपुरस्सराः प्रतिषिद्ध्यन्ते व्यापाराः।

न च म्लेच्छदेशशब्द आरबस्थानतुरुष्कस्थानतार्त्तारादि महामण्डलमात्रवचनस्तद्गोचरामेव व्याख्यातपारम्परीमभिधत्ते न पुनः परिशिष्यमाणहूणादिद्वीपयातायातमहोत्साहन्यक्कारस्य वक्ता कर्हिचिदिति वाच्यम्। "चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। स म्लेच्छदेशो विज्ञेय आर्यावर्त्तस्ततः पर" इति भगवद्विष्णुस्मरणाच्चातुर्वर्ण्यचातुराश्रम्यव्यवस्थानसामान्याभावाधिकरणभूभेदमात्रस्य म्लेच्छशब्दशक्यतावच्छेदकावच्छिन्नत्वात् उपलक्षणमेतद्यावद्ब्राह्मानुष्ठानानुष्ठापनयोः अनधिकृतत्वे तयोर्दौर्ब्राह्मण्याब्राह्मण्यानुपादेयत्वानामर्थादवधेयतावगमः। इत्थं च चातुर्वर्ण्यादिव्यवस्थानविरहित्वानुभवस्य हूणादिद्वीपेष्वप्यव्याहतत्वमिति फलतः समतैवावसीयते तयोरवान्तरभेदस्य दृष्टादृष्टप्रवृत्तिविशेषोपलक्षितस्य प्र-

सङ्गतो विचारसहत्वेऽपि तच्चिन्तनमकाण्डताण्डवप्रायमिदानीमित्युपरम्यते । नहि तत्रोक्तवर्णप्रतिनिधीयमानवर्णप्रस्थानसंक्रान्तिरपरिहार्य्या संपद्यते । कल्पनामात्रचित्रितत्वात् । "आर्यावर्त्तस्ततः पर" इत्यपरवाक्यनिगम्यमानपरिगणितवर्णव्यवस्थानायतनभूतभरतवर्षस्यैवार्य्यावर्त्तपदप्रवृत्तिनिमित्तापरपर्य्यायस्य व्यतिरेकमुद्रया प्रमितिविषयत्वात्तत्रैव तद्व्यवस्थानमिति वस्तुस्थितिः व्यवस्थानाव्यवस्थानयोरितरेतरप्रतिस्पर्द्धानिदानतया तत्फलभागस्यापि तथात्वमानुभविकम् ।

न च बौद्धावान्तरभेदानामवर्णाश्रमाचाराणामाम्नायार्थविद्वेषिणां मूलतो भरतवर्षशरणानामनवच्छिन्नसाहचर्य्योपनीततया परःशतसमासमासादितम्लेच्छादिनिरङ्कुशनिवासानामित्थंभूतज्झरीपरिजृम्भिततया च तदादिपादचारपरिच्छिन्नार्यवसुधाविशेषस्य व्यामिश्रप्रचारचरस्य स्वरूपविलोप एवेति शक्यं पर्यनुयोक्तुम् बुद्धवर्त्मदुरुद्धरदुरावेशवासितत्वेऽपि वर्णाश्रममहार्णवैकजन्मतया कतिपयाचारानुवर्तनायत्तसौमनस्यपरिशंसि स्वात्मप्रस्थानत्वे बुद्धाध्वसन्निविष्टैरापातव्यापारपरिवर्त्तनस्य म्लेच्छैरप्यनतिदिष्टतथाविधविधानस्यासम्पृक्तसाम्परायिककृत्यकदम्बसम्बन्धस्य चाद्यावध्यशेषवर्णवर्त्तिनामप्रत्यूहमनुवृत्तेः पुरा हि तद्भूयस्त्वाद्युच्छ्रयतायामपि प्रजाश्च वर्णाश्रमसंस्थानमय्य एव प्रतिजनपदमुद्दृष्टाः सम्प्रत्यपि सैव सरणिः सामयिकी यतः स्वरूपविलोपकला तथा न ऋच्छेदनर्थपारम्पर्य्यम् न हि चीनचापानतीबेटप्रभृतिदेशभेदानां बौद्धसन्तानैकसंव्यापिनामार्यवर्षबहिष्ठत्वेपि तन्मानवमूलीभूतचातुर्वर्ण्यसम्बन्धाभिधित्सया तद्देशाभिगमनमविप्रतिपन्नमुपपद्यताम् सर्वतश्चातुर्वर्ण्यव्यवस्थाहीनविजातीयप्रकारविकारवत्त्वात्तद्देशानामित्यवधारणीयत्वात् सति चैवमुच्छास्त्रोद्देशपरिशीलितस्वान्तानामेव प्रायो म्लेच्छदेशपरिव्रजनाभिनिवेशस्य कृतप्रयत्नतया

"न गच्छेन्म्लेच्छविषयमि" त्येतेन कीलप्रतिकीलन्यायाभिनि-योज्यत्वमनुत्कटं निगद्यते।

न च "मेध्या वा आपः मेध्यो भूत्वा व्रतमुपायानि" आपः स्वभावतो मेध्या" इति श्रवणस्मरणाभ्यामप्सामान्यस्य श्रौतादि-व्रतमात्रनिर्बर्हणयोग्यतापादकस्य निरङ्कुशमभिगम्यमानतया म्ले-च्छदेशजलप्राशनमज्जनयोरकर्तव्यताऽभिलापक "परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छती"ति स्मृतेर्दौर्बल्याप्रामाण्ये इति साम्प्र-तम् सलिलनिष्ठसांसिद्धिकपावित्र्यस्यानपनोद्यलेप्यौपाधिकावि-लतायां अपरिह्रियमाणतया तदभिप्रायप्रबोधिन्यास्तस्याः प्रामा-ण्यसबलतयोः सुस्थत्वात् स्वरूपैकसङ्कीर्तनप्रवणयोस्तयोरस्थाने संयोजनयोग्यताकानामुपेक्षणीयत्वाच्च तर्करसिकाणाम्। परनि-पानेष्वित्यत्र परे च वैदिकधर्म्मानुष्ठानवैरायमाणास्तद्गर्हिताचार-दुराग्रहग्रहा गम्यन्ते ते च म्लेच्छा एवार्थतः तदुपयोगदुर्म्मनाय-मानतया ब्राह्मणादीनामनुपादेयता तन्निपानानां न्याय्या।

न च "निपानमाहाव" इति जलाऽधारपरतायामाङ्पूर्वो ह्व-यतिस्सम्प्रसारणाब्वृद्धीर्भजत इत्यर्थकात्पाणिनिस्मरणा"दाहा-वस्तु निपानं स्यादुपकूपजलाशय" इत्यभिधानाच्चाकृत्रिमसरित्स-रोवरादिबहिर्भूतकृत्रिमजलाशयानर्थान्तरोपकूपनीरोपभोगनिन्दक-मेव वाक्यमेतदिति शक्यं प्रतिपत्तुम् तद्गतजलाशयकात्स्र्न्यस्य म्ले-च्छोपयोगपर्य्याप्तिकतया जलाशयसामान्यानुपादेयतोपलक्षकनि-पानपदस्य स्वार्थैकनियोगपरताया निर्युक्तिकत्वात् तथात्वे च प-दानामुपलक्षणचारित्वव्यवस्थानस्य दुःस्थतरत्वाच्च।

ननु "स्रवन्तीस्वनिरुद्धासु त्रयो वर्णा द्विजातयः। प्रातरुत्थाय कुर्वीरन्देवर्षिपितृतर्पणम्। निरुद्धासु न कुर्वीरन्नंशभाक्तत्र सेतुकृत्। तस्मात्परकृतान्सेतून्कूपांश्च परिवर्जयेदिति बौधायनस्मरणात्प्रवह-न्नदीवारिनिर्वाह्यत्वमवगम्यमानं सद्ब्रह्मयज्ञादेः सेतुकृत्स्वकर्मप्र-

भवसुकृतराशिगामित्वस्य तदधीनोक्तनिजक्रियानिष्पन्नपुण्यांशस्य पर्य्यालोच्यतयैव स्वभिन्नयावन्मानवनिर्मातृकसेतुकूपादिसंपरित्यागस्य न्याय्यतया नात्र दुरभिमानयोजनस्य म्लेच्छविषयविद्वेषकृतस्यार्हतेतिचेद्बाढमेवम् तथाप्यविशिष्टव्यक्तिसंभावनायां निजवर्गीणानप्यपह्नुवानाः समन्ततोविधर्म्मसमन्वययोग्यतां प्रमाणसामान्यनिर्वापितां महर्षयः कथंकारमभ्युपगच्छेयुरित्यञ्जसैव चेतयितव्यत्वात् प्रकरणस्य वा म्लेच्छविषयपर्याशासानस्य निरावेशसमन्वयैकगमकस्यान्यथयितुमशक्यत्वाच्च एवं च दुरावेशपङ्कप्रदिग्धशेमुषीकैस्तत्पानीयाद्यादरभरैर्म्लेच्छाविष्टभूयो धर्मभागिभिर्भूयत एव ब्राह्मणादिभिः इत्थं चानिष्टम् इष्टानिष्टयोगवियोगचिकीर्षूणां कृतं प्रज्ञयेति तत्प्रवृत्तिविमुखीकरणबद्धपरिकरा भद्रङ्करी स्मृतिरेषा शरणीकरणीया।

ननु "स्मार्त्तो द्वितीय" इति बौधायनानुशासने नो"पदिष्टो धर्म्मः प्रतिवेद" मिति प्रतिज्ञावचनान्तरीयकेण स्वतः प्रमाणभावसङ्कुचितेनैव विवेचितार्थप्रतिष्ठानपर्यवसाने स्वतः प्रामाण्यपरिनिष्ठिताम्नायानुपन्यासानुपातिन्यूनतापरिजिहीर्षाकृते निगमगिरामुदाहरणीयताया युक्ततरत्वमिति नैष दोषः "धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्। अपि वा कर्म्म सामान्यात्प्रमाणमनुमानं स्यादि"ति पूर्वतन्त्रगतपूर्वोत्तरपक्षसूत्राभ्यामुपनिबद्धस्मृतिप्रामाण्याधिकरणनिर्णयाशयातिशयस्य प्रमादालस्यादिदोषदूषिताध्येतृप्रणालीदौर्भाग्यसमुत्सन्नवेदशाखान्तर्हृदयश्रुत्यर्थोपबृंहकतयैव स्मृतीनामनन्यथासिद्धत्वसम्भावनैकसम्पन्नस्य समाराधनीयत्वात् तथा चाम्नायते "अजान् ह वै पृश्नींस्तपस्यमानान्ब्रह्मस्वयम्भ्वभ्यानर्षत्तदृषयोऽभवन् तदृषीणामृषित्व"मिति अस्यार्थः अजान् कल्पादावेव ब्रह्मणा सृष्टा न त्वस्मदादिवत्कल्पमध्ये मुहुर्मुहुर्जायन्ते ततोऽजाः ते च पृश्नयः शुक्लाः स्वरूपेणै-

वाविद्यकमालिन्यहीनाः "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप" इति स्मृतिप्रमाणसिद्धसकलकरणोपशमनलक्षणं पुनस्तपस्तेपुस्तत्तपसा परितुष्यमाणं स्वयम्भुब्रह्मनिरतिशयजगत्कारणं परं ब्रह्म काश्चिन्मूर्तिं धृत्वा तपस्यमानानृषींस्ताननुग्रहीतुमभ्यानर्षत् आभिमुख्येन प्रत्यक्षमागच्छत् तस्मात्ते मुनयः ऋष्धातवर्थविषयत्वादृषयोऽभवन् ततोऽन्येषामप्यृषीणामनयैव व्युत्पत्त्या सम्पन्नमृषित्वमिति । स्मर्य्यते च "युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति गतोऽयमर्थः तत्रभवान्मनुरपि "अनाम्नातेषु धर्म्मेषु कथं स्यादितिचेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कित" इत्याचख्यौ अयमस्यार्थः "सत्सु निरतिशयप्रमाणभूताम्नायमुखेनानवधार्य्यमाणेष्वप्रायिकधर्म्मेष्वाकांक्षायां च किं प्रमाणगम्यता तेषामिति शिष्टब्राह्मणसिद्धान्तित एव निर्विचिकित्स इति निरर्गलं गम्यते शिष्टत्वं च ब्राह्मणेषु विशिष्टलक्षणलक्षीक्रियमाणत्वम् ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टा" इति पतञ्जलिचरणाः "शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिता" इति बौधायनपादाः। "धर्म्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतव" इत्यभ्यधायि तत्र भवन्मनुनापि। "न पाणिपादचपलो न नेत्रचपलो भवेत्। न चाङ्गचपलो विप्र इति शिष्टस्य गोचर" इत्यपि। "अथ यदि ते कर्म्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ताऽयुक्ताः अलूक्षा धर्म्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथा" इत्येवमाद्याः श्रुतयो बह्व्यः आसामयमर्थः अथैवंवर्त्तमाने त्वयि यदि कदाचित्ते तव श्रौतस्मार्त्तव्यावहारिके च क-

र्म्मणि वृत्ते वा शिष्टाचरणपरिरक्षणलक्षणे विचिकित्साविशयः स्याद्भवेत्तदा तस्मिन्देशे काले वा वर्त्तमानाः सम्मर्शिनो विचारक्षमाः युक्ताः परिगणितकर्म्मस्वभियुक्ताः अयुक्ताः अपरप्रयुक्ताः स्वतन्त्रा इतियावत् अलूक्षाः अरूक्षाः अक्रूरविचाराः धर्म्मकामाः अदृष्टार्थिनः अकामहता इत्येतत् एवंलक्षणलक्षिताः ब्राह्मणाः श्रोत्रियाः शिष्टाचारानतिक्रमैकमतयो न त्वपरे ते तत्र दर्शितार्थेषु वर्त्तेरन् तदविरुद्धवर्त्तनैकनिरतस्त्वमपि भवेति परम आदेशोपदेशाभिसन्धिः अपि च "स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयमि"ति श्रुत्यैव प्रमाणविभागभागिन्या स्मृतिप्रामाण्यमाद्रियतेतराम् स्मर्य्यन्ते श्रुतिसिद्धार्था अनयेति स्मृतिरनुमेयश्रुतिमूलं मन्वादिशास्त्रम् १ प्रत्यक्षमुपाध्यायोपदेशमर्य्यादया परम्पराधिकारिवर्गाणां श्रोत्रेण गृह्यत इति श्रुतिः यद्वा हिताहितप्राप्तिपरिहारौपयिकालौकिकार्थाः श्रूयन्तेऽनयेति श्रुतिर्वेदः २ ऐतिह्यं महाभारतादीतिहासः ३ अनुमानः श्रुतिस्मृत्योरनु पश्चात्साक्षाच्छ्रुतिस्मृत्योरनुपलभ्यमानयोः श्रोत्रियादिपरम्परया तत्प्रतीतार्थो मीयते प्रमीयतेऽनेनेत्यनुमानः शिष्टाचारः तेन हि मूलभूतं श्रुतिस्मृतिलक्षणं प्रमाणमनुमीयते "आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो" इति याज्ञवल्क्यस्मरणाच्छिष्टाचारस्थानीयभोगविशेषानुग्राह्यत्वमागमस्यावगम्यते असति तत्प्रचारे आम्नायस्य निर्म्माल्यप्रायत्वात् सत्यप्यतज्जनप्रायिकप्रचारे तत्त्वेनैव तदाचरणस्य गर्हास्पदत्वादिति विपर्य्ययोऽवसेयः तदेतत्स्मृत्यादिचतुष्टयमवगतिहेतुभूतं प्रमाणं सदितरेतरसन्निधावन्योन्योपजीव्योपजीवकभावापन्नमन्यतमं तेषामवशिष्टप्रमाणकर्त्तव्यताप्रतिनिधितया प्रतिपित्सितार्थसमुद्धारसमर्थमेव युक्तमुत्पश्याम इति कृतमन्यादृशकल्पनाक्लेशपाशैः ।

ननु माहिम्लेच्छदेशप्रयाणमहोद्यमाह्लादो मा च द्वीपान्तरपरि-

भ्रमणपरीरम्भसम्भ्रमः सहसा भूम्यध्वनासाक्षाद्भूतसमुद्रमार्गतो नौकया ननु विमानस्थानीयया तन्निर्वाहपरिमाप्तौ का नो हानिर्निजहानिप्रहापनैकमहाशयानामधुनातनानामितिचेद्धम्भण्यतां तावत्कामकारसदाकारैः परमत्र चिन्तावतारसन्तानत एव तदाश्रवप्रतिश्रवयोरुपभोक्ष्यमाणत्वान्न संप्रवृत्ताभिहासः साधुचरणः ।

यद्यपि । "समुद्रो नदीभिरुदक्रामत्तां पुरं प्रणयामि वः तामाविशत तां प्रविशत साधः शर्म्म च वर्म्म च यच्छतु १ तदुच्छ्रयस्व द्यौरिव समुद्र इवैध्यक्षत । २ अपः समुद्रादिवमुद्वहन्ति दिवः पृथिवीमधि ये सृजन्ति । ये अद्भिरीशाना मरुतश्चरन्ति ते नो मुञ्चन्त्वंहसः ३ प्रजापतिः सलिलादासमुद्रादाप ईरयन्तु दधिमर्दयाति ४ उदीरयत मरुतः समुद्रतस्त्वेषोऽर्को नभ उत्पातयाथ ५ योऽग्रतो रोचनानां समुद्रादभिजज्ञिषे । ६ दिवि जातः समुद्रजः सिन्धुतस्पर्य्याभृतः ७ समुद्राज्जातो मणिर्वृत्राज्जातो दिवाकरः ८ सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् ९ इरेव नोपदश्यति समुद्र इव पयो महत् १० कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविवेश ११ यासां द्यौः पिता पृथिवी माता समुद्रो मूलं वीरुधाम्बभूव १२ वाश्रा इव धेनवः स्पन्दमाना अञ्च समुद्रमवजग्मुरापः १३ उपजीका उद्भरन्ति समुद्रादधिभेषजम् १४ आर्द्रं तदद्य सर्वदा समुद्रस्येव स्रोत्याः १५ विद्म ते धाम परमं गुहाः यत्समुद्रे अन्तर्निहितासिनाभिः १६ अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः १७ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ततो रात्रिरजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधि संवत्सरोऽजायत १८ स एष पुरुषः समुद्रः सर्वं लोकमत्ति" १९ इत्येवमाद्याथर्वणबाहृचयाजुषादिस्थानिकमन्त्राः समुद्रपदोपलक्षितोच्चावचावष्टम्भसम्भारसध्रीचीनाः प्रधानस्वार्थयोगैकयोग्यताकप्रक्रमविशेषविधाना उपसर्जनाभ्युत्थानविद्योतितान्तरालक्रियावि-

णास्तीत्वकतन्मानप्रख्यापनच्छटानिरस्तवस्त्वन्तरा भूतमातिकसञ्ज नानुकूलविशिष्टोपयोगसमापन्नसंशीलाः तदपादानादिकारकास्तित्वव्यापृतमहनीयकार्य्यापूर्वप्रादुर्भवनप्रतिष्ठानाश्च तत्रतत्र मुख्यगौणाभ्यां प्रतिपद्यन्ते वृत्तिभ्याम् । प्रभूतेभ्यस्तावदुदाहरणप्रत्युदाहरणेभ्यो रूपकप्रतिसन्धानमविशिष्टमेव शश्वद्विधीयते च तथापि विगृह्य व्याख्यानपरतायामुपक्रमपरामर्शोपसंहाराः पार्ष्णिग्राहस्थानस्थायितया विरूपार्थप्रत्याख्यानायाङ्गीकृतशरव्याः पराभावयन्त्येव प्रतिद्वन्द्विन इति यथा भूतार्थविशदीकरणप्रतिभासङ्ग्रहणस्य वदनविसम्वदनादिवर्त्तनाविधुन्तुदस्य संख्यावत्स्तूयमानस्य सततमनुभावनीयत्वात् ।

प्रकृते च समुद्रवन्ति समवेता ऊर्ध्वं द्रवन्ति गच्छन्त्यापो मरीचिभिराकृष्यमाणा इत्यादित्यमण्डलम् । समुन्निपातपूर्वाद्द्रवतेर्गत्यर्थादन्येष्वपि दृश्यत इत्यधिकारादपादाने डप्रत्ययटिलोपयोरूपमभिनिष्पद्यते समुद्र इति । १ यद्वा । संहता एवाभिद्रवन्त्यम्बूनि भौमरसलक्षणान्यनिलप्रचोदितान्यादित्यमण्डलाद्वा वर्षासु किरणैः प्रवर्त्तमानानीति समुद्रशब्दमेवंव्याचख्यावत्रभवान् यास्कः समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा इह हि समितिनिपातो निरातङ्कवादी उदित्युपसर्गोऽभीत्यर्थवाची कर्म्मणि डप्रत्यय इत्येष विशेषः २ सम्मोदन्तेऽस्मिन्भूतानि स्वचारीणीति नीरधिपरमेवावगम्यते समुद्रपदम् संपूर्वान्मुदहर्षे इत्यस्माद्धातोः "स्फायितञ्चिवञ्ची" त्यौणादिकाधिकारेणाधिकरणेरकि समो मलोपे च रूपमभिनिष्पद्यते ३ यद्वा समीत्येकीभावे उदकादुच्छब्दो रो मत्वर्थीयः एकीभूतान्युदकान्यस्मिन्वर्त्तन्ते वर्षास्वित्युदकशब्दस्योद्भावश्छान्दसः ४ अथवा "सम्पूर्वादुन्दी क्लेदने" इत्यस्माद्धातोः

"स्फायितञ्चिवञ्ची"त्यादिना कर्त्तरि रक्प्रत्ययेकित्वान्नलोपे च समुद्र इति संपद्यते समुनत्ति निजसत्तया भुवनमिति समुद्र इत्युदिताभ्यामुत्पत्तिभ्यां द्युमण्डलमहार्णवयोः प्रतिपत्तावाद्यस्य व्यवहितस्वरूपपर्य्यालोचनया तत्रतत्र प्रतिमानमात्रप्रयोजनवत्त्वेऽपि प्रस्तुतप्रवासलक्षणमहोत्साहयोग्यताकत्वाभावात्तदुपेक्षा। द्वितीयस्याश्च सागरव्यक्तेर्जगतीतलसदालम्बितया समाश्वसितार्थयोग्यतापादकत्वसम्भावनायामुरुतरवाणिज्यादिसंवर्द्धनैकफलकप्रयत्नवद्द्वीपान्तरीणमानवमहौन्नत्यपरामर्शप्रोत्साहमूलायां पाक्षिकसमृद्धेर्जिघृक्षानिरीक्षितस्य पाक्षिकनिर्ह्रासलक्षणविपत्तिहस्तग्राहस्य च प्रत्ययस्य सुमनोमनोमात्रप्रमितत्वात् उभयोर्बलाबलविचारणायामपर एव प्रधानफलभूमिक आपद्यते अदृष्टार्थप्रतिष्ठापनैकनिमित्तत्त्वात्प्रयत्नसन्तानस्य। न च दृष्टफलोपभोगप्रवृत्त्युपेक्षालक्षणधीमान्द्यमनपह्नुत्यात्यन्तपरोक्षफलोपादानलक्षणतृष्णामोदकायमानोदासीनभावेभ्यः स्पृहयेयुर्विचारकवरा जातुचिदिति वाच्यम् विरहय्यैव पृथग्जनानुभूतिभुवः पारीणसंवित्समारूढानेव भोगतराननुभावयमानानां मनीषातिशयस्य मनीषिमात्रविश्रान्तनिजसत्वस्य वस्तुस्थित्यनुयायित्वादीप्सिततरादृष्टार्थसमर्थनस्य पुमर्थपर्य्यवसायित्वा"द्भूतं भव्याय कल्पत" इति न्यायानुगमाच्च इतरथा तारतम्यप्रबन्धबन्धस्य प्रत्यर्थमनुविधायिनः समुच्छेद्यत्वापत्तेः तच्चादर्त्तव्यताभरमुपनिबध्नात्येव प्रतिप्रकरणम् सर्व्वस्यास्य प्रमाणमेव नेतृ। नतु मतिगतिः केवला। नापि सन्निहितसौख्यसमुच्चिता। नापि पुनरुदात्तमानवोदाहरणसंहता। न च नो दृष्टप्रयोजनप्रेर्य्यमाणानामदृष्टप्रयोजनौपयिकसरणिसमाश्रयणमप्रयोजकमेवासङ्गतिकनियोगनिन्दितत्वादिति वाच्यम् दृष्टादृष्टप्रयोजनयोरात्मनिष्ठप्रत्यासत्त्या समप्रवाहपरिपतिततयाऽयुतसिद्धतापरिसिद्धेः तयोः पुनरुपचयापचयोपस्थितावभीष्टतरस्याप्यन्यतरस्याफलप-

र्य्यवसायिनः परिरितित्याजयिषितत्वाच्च न कुत्रापि निर्भरसमाश्वास इति प्रेक्षावच्चेष्टाभेद एव प्रमाणम्।

नन्वास्तां तावदेतदेवम् नहि तावता समुद्रविहारप्रमोदापनोद्यनिष्टापादकनिमित्तोपन्यासमृते तत्प्रत्याख्यानप्रक्रिया नन्वनुमोद्येतमतिमद्भिरिति अत्रोच्यते सागरविहारो नौयानसाधनैकसाध्यः तद्धि यद्यपि दारुमयं सन्ननैसर्गिकदोषभाग्गम्यते केवलं कैवर्त्तकादिसांसर्गिकदोषकर्दमदिग्धता ह्याधीयते तथापि न ते कैवर्त्तकादयः स्वजातिमात्रनिबन्धनाः प्रत्युत यवनादयस्तत्कार्य्यकरा भूयांसः अशनपानशयनादयस्तदीयायानैकनिकेतनाधीनाः यैः साक्षात्परम्परया च संसृज्यन्ते यानिकजनाः स हि संसर्गो मौहूर्त्तिको यामिक आह्निकः पाक्षिको मासिकादिर्वेति न शक्यते परिच्छेत्तुम् यावत्तदनुवृत्तिर्न्न तावत्ततो विशिष्टचरणासंसर्गिणः व्याप्यव्यापकभावकृतवैलक्षण्यलेशोपलब्धावपी "षद्वैषम्यमविवाक्षित" मित्येवार्थादापतेत्। तत्वतस्तु तन्निरूपितनिकर्षमापद्यमानास्तेभ्यो विशिष्टजन्मानोपि हीयन्त एव कर्म्मभिरित्यविवादम् तथा च स्वाचारतिलाञ्जलिरश्रद्धाम्भःसन्दोहदुरुद्धरः॥

यत्तु प्राचीप्रतीच्यवाचीजलधिवेलासमधिष्ठितजनपदपुटभेदनस्थितिजुषामितरेतरसन्निकृष्टनगरीग्रामटिकाप्रवसद्ब्राह्मणादीनां नौकायानैकसमुपायानामभ्युक्तदूषणगणग्रस्ततायाः सार्वजनीनानुभवपथमधिरूढाया दुराधर्षणीयत्वे तज्जातीयदीर्घप्रवासविषयद्वीपान्तराभिगमननिरूढोपायभूतसमुद्रयानपरिग्रहस्य कथङ्कारमतौल्यानधिकृत्योः प्रतिपत्तिराक्षिप्येत द्वीपान्तरप्रस्थानेप्यवतरणप्रस्थानानां कतिपययोजनान्तरितविषयविशेषसन्निबद्धानां स्नानसन्ध्याद्याराधनपाकनिर्हरणानुकूलानां धार्म्मिकजनसेव्यमानयमनियमनिराबाधसन्धानानां तत्तन्मण्डलाधिपनिरातङ्काधिकाराधिकृतानां नियतत्वेन न निजधर्म्मानुष्ठानप्रलयप्रवादो द्वीपान्तरप्रवा-

क्तिसहोदरीया नियामकत्वात् तयोरन्तःकरणधर्म्मतया बाह्यभूमि-
कासाहाय्यानपेक्षत्वाच्च साधुशैलीसंक्रान्तसामन्तमानवसमुच्चयस्य
मैत्रीकरुणापुरोगमगुणगणस्निग्धीभूतस्य समागमानन्दसुधारसस्य-
न्दिनः समस्तखण्डसंसदनत्वसम्भवेन न सुन्दोपसुन्दन्यायाक्षिप्त-
निजमण्डलीसौमनस्यमृते ह्यार्य्यवर्षवास्तव्यानामाभ्युदयविपाकः
सुगमः। दुरुच्छेददौर्मनस्यसारणीसमाप्लुतोद्यममहनस्य द्वीपान्तरो-
द्भूतमहार्घपदार्थदीप्तिघनवाणिज्यप्रच्यवनपात्रीभूतस्य चिरतरका-
लानुवृत्त्या सांसारिकसुखानुभवनमत्यन्तपरोक्षभूतमनुजानीमहि।
परप्रकर्षसाम्राज्ये चोदाहृतनिजापकर्षदौर्भाग्योपचायके प्रत्यक्ष-
मेवानुमोदेमहि। कमनीयकलाकलापवैदुष्यसामान्यहानमपि प्रमे-
यप्रस्थानसन्नहनप्रमादमयमशेषानर्थनिष्कुटमनुपदमनुभुञ्ज्महे। स-
त्यमेवमतिशयितवैमत्यानुधावकवाक्यजातमेव जगच्चर्य्याऽपरिनि-
ष्ठितस्वान्तोज्जीव्यायोग्यकल्पनाकमनवच्छिन्नसत्यसङ्गरस्थानीयत-
या श्रद्दधेमहि। एवञ्च वयमार्यावर्त्तवणिग्जनास्समन्ततो हता एव
द्वीपान्तरगमनाभ्यनुज्ञानमनापन्नाः प्रत्यर्थमधिकतरमौल्याङ्गीका-
रमहामोहपरिलम्भिता दृष्टतरप्रहाणिमसहमाना वातुलव्रातसमस्व-
भावाश्चाध्यास्महे स्वं स्वं गेहमिति किमित्येषा महती विपत्ति-
रिति। तत्प्रत्याचक्ष्यते तीरवर्त्तिजनपदपुरादिप्रस्थानम्प्रत्यल्पका-
लस्यैव विधीयमानतया "नतु तत्तीरवासिनामिति" स्मृतेर्नियतस-
मयनिष्पाद्यनिजधर्म्माचरणस्यार्य्यमण्डलैककर्त्तव्यताविशेषात्मनो
व्यतिक्रमणाप्रसक्तिमनुसन्दधत्याः प्रामाण्यमास्थाय दूषणानास्पद-
त्वे विप्रकृष्टतरद्वीपान्तरप्रयाणदीर्घकालयापनदुरपास्तधर्म्मव्यतिक्र-
मणमहाहानिप्रमुखवैलक्षण्यपर्य्यवेक्षयाऽतौल्यानधिकृत्योर्य्युक्तता-
याः प्रतीततरफलपर्य्यवसानायाः प्रतिसन्धातव्यत्वात्। १ उल्लि-
खितलक्षणानामवतरणप्रस्थानानामानुभविकत्वेऽपि तदधिष्ठिता-

र्य्यवर्णवर्गिणामवश्यानुष्ठेयब्रह्मकर्म्मभागैकसंसाधनयोग्यताकजलस्थलादिसामग्रीमृग्यतायां नौकाऽऽरोहणवेलाविशेषमुपक्रम्य आर्य्यावर्त्तप्रत्यागमनमनुवर्त्तिन्याः प्रसाधितानुपपत्त्यनुविधायिन्या अविधूयमानत्वेन तद्व्यपाश्रिताक्षेपस्य कल्पनामात्रनिदानत्वान्निजधर्म्माचरणस्य श्रद्धाभक्त्यैकनियतत्वेऽपि प्रतिकूलानुकूलसामग्र्योर्विधेयानुत्पादोत्पादानुभाविकत्वस्य विभावनाविशेषार्हत्वादुद्दिष्टव्यवसायातिशयस्याननुभूतफलकत्वे निजधर्म्मापरिहार्य्यप्रभ्रंशप्राग्भारमहाफलस्य निजपरविचारणासमुत्तीर्णस्य निर्व्यग्रमापतितत्वात्कोन्वत्रव्याख्यातृव्यक्तीनामपराधः अबाधितार्थानुभूतिप्रायिकत्वात्तदादेरित्यनुसन्दधन्तु । २ सामन्तानामुदाहृतस्वरूपाणां दिशिदिशि भूयस्त्वे साङ्गत्यातिशयस्य वा तेषां व्यावहारिकफलाधिक्योपोद्बलकत्वेऽप्याविप्रतिपन्नसमागममहाप्रस्थानानामार्य्यचर्य्यासमनुसंहितप्रभूतपरार्थपर्य्याप्तानां परिष्कृतप्रमाणमीयमानानामेव प्रतिष्ठितत्वात्तदर्थताच्छील्यमन्यत्रादृष्टचरं सच्चातकजीमूतनैष्ठिकमैत्रीन्यायैकयायितया न सुन्दोपसुन्दन्यायसंघटनमप्रत्यूहनिजभावोपपन्नब्राह्मणादीनविषयीकुर्वद्विषयीकुर्य्यादेव स्थानिकस्वभावविशेषानन्यत्रेत्यास्तां तावत् । ३ आर्य्यावर्त्तवसतीनामनार्य्यक्षोणीमण्डलसम्भवद्वस्तुजातोपभोगैरुपभोगित्वनियमने विनिगमकाभावात् तदाद्युपभोगपरम्परायाश्चादृष्टाश्रुतचरत्वाद्भरतवर्षीयोपभोग्यवस्तूनां रसवीर्य्यविपाकादिसम्भराणामतन्न्यूनसत्ताकत्वसङ्कीर्त्तनानां त्रैकालिकप्रसूत्यापन्नस्वभावचञ्चरीकाणामव्यग्रतायामनिलसलिलाद्युपाधिकृतानेकव्यग्रतावगाहिद्वीपान्तरवाणिज्यवाञ्छाया औत्सुक्यमात्रनिर्वर्त्तनप्रयोजनाया अविचारितरमणीयतया तत्प्रक्रियाविशेषगोचरालापविलापधाराया निर्य्युक्तिकत्वात् । भरतखण्डीणवणिग्गणमत्यद्वैतस्य वा तत्रतत्र दुःसम्पाद्यत्वाद्द्वीपान्तरीणवाणिज्यविक्रमणस्य दारिद्र्यदौर्म्मनस्ययोरपग-

तानेकाकारकत्वस्य मौहूर्त्तिकवणिक्छिखामणिभ्यामनिर्णीतत्वाच्च । प्रातिस्विकविचारणाप्रघट्टिकानामकार्य्यकाराणामाशामोदकप्रायतयोपेक्षणीयतेत्यलं कल्पनापल्लवसमुल्लासैः ।

प्रकर्षनिकर्षयोः साम्राज्यदारिद्र्ययोः शुभाशुभकर्मफलभूतयोः "अचोद्यमानानि यथा पुष्पाणि च फलानि च । स्वकाले नातिवर्त्तन्ते तथा कर्म्मपुराकृतम् १ यथा धेनुसहस्रेषु वत्सो विन्दति मातरं । एवम्पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति । २ जीर्य्यन्ति जीर्य्यतः केशा दन्ताजीर्य्यन्ति जीर्य्यतः । चक्षुःश्रोत्रे च जीर्य्येते तृष्णैका न तु जीर्य्यति ३ या दुस्त्यजा दुर्म्मतिभिर्य्या न जीर्य्यति जीर्य्यतः । योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ४" इति महाभारतस्मृतिभ्यो विविच्य सम्प्रधारणीयतया कापुरुषपुरुषकारातन्त्रत्वाऽऽस्थाने सङ्ग्रहणीया स्वमतिरिति विबुधप्रवादः । "कलानामाकरः साक्षाद्विद्यानाम्परमोनिधि" रित्यादिवचनेभ्यः सकलकलाविलासमहामन्दिरतया भरतवर्षस्यैव त्रिलोकीविख्यातत्वे तद्गतकलातास्कर्य्यवद्द्वीपान्तरवैशारद्यवैशद्यादेः सम्प्रत्युच्चैस्तरत्वेपि भरतवर्षविषयीभूतप्रकृतिविशेषभागस्य सकलसन्दर्भसंस्तूयमानस्य निरस्तसमस्तापवादत्वात्तत्कलाकलापसंस्तवकृते न खण्डान्तरमभिगम्यम् । साम्प्रतिकतदीयकलाभेदानामन्यादृशप्रागलभ्यफलकत्वेऽपि न तत्त्वप्रतिपत्तये प्रसङ्गातिशयफलप्रदायिन्यै प्रवासः सूपपादः । गमनेऽपि परवशंवदयोग्यताऽऽसादनदुर्गमता च दुरपास्तैव परेषां कलाविशेषवितरणमहिम्नोऽनसूयितमप्रतिपद्यमानत्वाच्चेति वस्तुगतिः । इत्थञ्च विचारवैकल्यसमुद्भववदात्मभावैर्व्यतिक्रान्तार्य्यमर्य्यादाऽनवच्छिन्नप्रबन्धैर्निजावेशविशेषोपरोधकाप्ततरव्यक्तिभ्यः परं वैरायमाणैस्तद्विपर्य्ययप्रकृतिविशेषेभ्यः सदैव स्पृहयद्भिः "कीटाश्च पुरुषाश्चैव विरूपा व्याधितास्तथा । परद्वेष्याश्च मूर्खाश्च न तैर्धर्म्माः कृताः पुरा । एकदीर्घायुषः शूराः पण्डिता भोगिनस्तथा ।

अरोगा रूपसम्पन्नास्तैर्द्धर्म्माः स्युः कृताः पुरा" २। इत्यादि वृद्धगौतमाद्यानुशासनिकवचनाभिसन्धिमननुसन्दधानैः स्वकीयैः न तु स्वस्त्ययनप्रवादानभिव्याहरद्भिः परमोद्यमछन्द्यमानमात्मानमभिख्यापयद्भिश्चोत्प्रेक्ष्यमाणोहापोहसमूहध्रौव्यादिपर्य्यालोचनया न ते बुबुधिरे स्मृतिकर्तृमहर्षीणां "साक्षात्कृतधर्म्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्म्मभ्य उपदेशेन मन्त्रान्संप्राहुः—न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतुर्मुखः। तथैव धर्म्मस्मरणे मनुः कल्पान्तरान्तर" इति नैरुक्तपराशरादिवाक्यसम्प्रतीतप्रतिष्ठितगौरवाणां तत्परम्पराकाणाञ्च तन्मार्गैकसमधिष्ठितानां माहात्म्यलेशमपि। न वा मेनिरे तत्संप्रदायाधीनस्वपैतामहीं पूर्वपूर्वतरां सन्निष्ठाम्। अपि त्वधुनातनीमेवाविचारकपित्रादिश्रद्धार्धीमान्द्यसमधिष्ठितान्नुतामापेदिरे एवञ्चालेभिरे विप्रलम्भप्रवृत्तिभिरनुपलम्भनीयाभियुक्ततमजगत्स्थेमानमित्यनुपादेयवचना एवावधार्य्यन्ते। तथा चार्जनीयद्वीपान्तरवाणिज्यजन्यसम्पत्तिनिर्भरत्वे निरूपणीयद्वाराणां जागरूकतया तदन्यतमद्वारोपादानतो वा स्वसाक्षाद्द्वारवर्ज्यमभीप्सितार्थसंसिद्धिर्दैवबले भाविन्येवेत्यादिरनवस्थितशङ्कानां समाधिः।

केचित्तु भरतखण्डबहिर्भूताङ्गलद्वीपमण्डनायमानलण्डनमहाराजधान्यामेवेदानीन्तनसार्वभौमपदस्य प्रसिद्धतरत्वे तन्महापरिषदः पारिलमेण्टपदाभिधेयायास्तदवनीतलैकबंभ्राज्यमानायाः समस्तार्य्यवर्षमण्डलेशसामन्तसम्भावितानां प्रत्यासन्नसांसर्गिकव्यवहारपरिनिष्ठितपरिष्कारपयोदुहः शश्वत्परिसेव्यमानत्वे तारायन्त्रागमद्वाराभ्यां तदुद्धारसमाधानप्रक्रियायाः संजातप्रायत्वेपि निश्शल्यसमाधानविधानस्य मण्डलाधिपतन्मन्त्रिप्राड्विवाकप्रतिनिधीनां साक्षात्समवधानविवदनादिप्रयत्नमात्रसारत्वेन "सिविल्सर्विस" संज्ञकपरपरीक्षासमुत्तरणविधानव्यवस्थायाः संक्लृप्तवयोविशेषप-

रिलक्षितायास्तन्नगरीमात्रप्रतिष्ठितविद्यालयैकविषयतया तदुपाधिसमुत्कमानसानां ब्राह्मणादिवर्गीणविद्यार्थिसार्थानां तत्पुरीपर्यटननिर्वाह्यतायाः प्रतिबन्दितरत्वेन धनुर्वेदायुर्वेदादिप्रस्थानविन्याससम्भाराभिरक्तवैदग्ध्यस्य तत्रैव प्रेक्षावद्भिस्तथात्वेनैव संग्रहणीयत्वेन च तद्द्वीपाभिगमनमहारम्भो "राजा कालस्य कारणम्" अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः —ना विष्णुः पृथिवीपति" रित्यादिस्मृतिमहीकृतदर्शनीयसार्वभौमशुभावासपूतीकृतत्वे तद्द्वीपयात्रामैत्र्याः स्मृतिकारमहानुज्ञानगोचरतयाऽविप्रतिपत्तव्यः

१ धार्म्मिकाग्रयाय्यर्जुनभीमसेनादिपाण्डुनन्दनानां राजसूयमहोत्सवौपयिकदिग्विजयप्रस्तावे "ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा। सुह्मानामधिपं चैव ये च सागरवासिनः। सर्वान्म्लेच्छगणाँश्चैव विजिग्ये भरतर्षभः एवम्बहुविधान्देशान्विजित्य पवनात्मजः। वसु तेभ्य उपादाय लौहित्यमगमद्बली। स सर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः। करमाहारयामास रत्नानि विविधानि च" "दिशं धनपतेरिष्टामजयत्पाकशासनिः। भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणां। प्रतीचीं नकुलो राजन्दिशं व्यजयतास्त्रवित् १ स तेन सहितो राजन् सव्यसाची परंतपः। विजिग्ये शाकलं द्वीपं प्रतिविन्ध्यश्च पार्थिवम् २ शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः। अर्जुनस्य च सैन्यैस्तैर्विग्रहस्तुमुलोऽभवत् ३ स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत्। अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः ४ वशे चक्रे महातेजा दण्डकांश्च महाबलः। सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ५ निषादान्पुरुषादांश्च कर्णप्रावरणानपि। ये च कालमुखा नाम नरराक्षसयोनयः ६ कृत्स्नं कोलगिरिं चैव सुरभीपट्टनं तथा। द्वीपं ताम्राह्वयं चैव पर्वतं रोमकं तथा ७ रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः। तान्सर्वान् स वशे चक्रे शासनादेव पाण्डवः ८ ततः सागरकुक्षिस्थान्म्ले-

च्छान्परमदारुणान् । पह्लवान्बर्बरांश्चैव किरातान् यवनान् शकान्"
९ इति प्रतीयमानाभ्यः किल महाभारतवचनव्यक्तिभ्यः । श्रीमद्विक्रमादित्यस्यापि दिग्विजयमहोद्यमप्रसङ्गतश्च "यस्याष्टादशयोजनानि कटके पादातिकोटित्रयं वाहानामयुतायुतञ्च नवतेस्त्रिघ्नाकृतिर्हस्तिनाम् । नौकालक्षचतुष्टयं विजयिनो यस्य प्रयाणेऽभवत्सोऽयं विक्रमभूपतिर्विजयते नान्यो धरित्रीधरः १ योरूमदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयिनीं समाहवे । आनीय सम्भ्राम्य मुमोच यस्त्वहो सविक्रमार्कः समसह्यविक्रम २" इति ज्योतिर्विदाभरणवाणीभ्याञ्च द्वीपान्तराभिगमनतत्रत्यहूणयवनादिराजचक्रमहाविजयादेरुद्घोष्यमाणतया समुद्रयानम्लेच्छविषयपर्य्यटनपुरोगमा निष्प्रत्यूहमध्यवसीयमाना एव व्यासङ्गा न नः किञ्चित्कस्मैचिदपचयाय पर्य्याप्तास्तदनुकृतिकृतसदाश्वासानां बत क्षोणीश्वराणामितरेषाञ्च तदुपजीविजनविशेषाणामशेषाणां वा यथायोगमिति नात्रापि शास्त्रातिक्रम इति प्रत्यवतिष्ठन्ते । तदेवं तत्त्वविदो न क्षमन्ते तथा हि साम्राज्यपदाधिकारतत्परिषदोर्लेण्डनप्रस्थमध्यस्थत्वे तत्प्रयोज्यशास्त्रार्थनिबन्धबन्धस्य वस्तुयाथात्म्यादिदशाविशेषरूप्यतायाः स्थिततरत्वे किं तत्रार्थनिरूपितन्यूनतायाः स्वाभीष्टाघटने हेतुता । १ उतानुवादकागमप्रयोगशैथिल्यसम्मीलितस्वपक्षविशेषस्य । २ अपि वा ग्राहकप्राड्विवाकादिप्रधानविवेचकदौर्लक्ष्यानुयोगिदैवविशेषस्य । ३ आहोस्वित्कक्षाऽप्रक्षीणयोग्यताधीननिरीक्षकविमर्शमोहस्य । ४ उत वादिष्वेव मण्डलाधीशादिष्वाकस्मिकानाकस्मिकामित्रभावस्य । ५ नाद्यः स्वपक्षगतदौर्बल्यस्य यथावद्व्यक्तीभवने तन्मात्रनिर्द्धारणस्यैव न्यायाऽकारतया अन्यायोपात्तसम्भावनाया अयोगात् । १ न द्वितीयः विवेक्तव्याऽर्थातिशयलक्षीकरणनिष्ठावदागमग्रामस्य विवक्षितार्थैकशरीरतया तन्मूलकपक्षप्रतनुताप्रकल्पनायाः सुतरामनन्वित-

विपादवादस्यानुमोघलाच । २ न तृतीयः न्यायाविकृतदुरूहव्य-
ञ्जनानुरञ्जितदैवस्य स्वनिष्ठदैवविशेषानिर्वाप्यतापरीतत्वात्समप्रकृ-
तिकयोरेव प्रतिबध्यप्रतिबन्धकभावानुभावात् । ३ नापि चतुर्थः
कक्षानिरूढयोग्यतायाः सुस्थत्वे प्रत्यनीकसामग्र्या अनारोहपा-
त्रतायास्तादवस्थ्यात् तत्प्रसारे वा व्यामोहमात्रप्रादुष्करणे कक्षा-
गतोल्बणसन्धैव सम्प्रतीयात् । ४ यादृच्छिकाद्यमित्रभावापत्तौ
निमित्तान्तरस्य सम्पातायातस्य योजकतया तस्य प्रक्रान्तन्याय-
विग्रहासम्पृक्तशीलतरत्वात् प्रकारान्तरेण परिहारोपकरणविप्र-
कीर्णत्वाच्चेति न पञ्चमोऽपि । तथा च कतमेनापि कल्पेन निजेष्टनि-
र्द्वन्द्वपर्य्यवसानस्यान्तरायग्राहग्रस्ततया निरन्तरायोपायान्तरस्य फ-
लतः परिशिष्यमाणस्य पर्य्यन्तप्रकरणागोचरतैवाऽपद्यते । तत्प्रा-
पिपयिषासमाविष्टव्यक्तीनामानन्त्येऽपि तदुपायानुष्ठाननिर्व्यग्रनि-
ष्ठाभूयिष्ठां न काञ्चिदनुजानीमहे विशेष्टुम् । तथाविधम्मन्यावाऽर्थै-
कदेशसम्प्रतिपन्ना अपि विप्रतिपन्नार्थव्यवहारिण एवार्थैकदेशे स-
म्मीयन्ते यदि तेच तान् लक्षीकुर्वाणाः प्रयतेरन् सम्बध्नीरन्नेव
चिरेप्सितविचारणाऽऽकलितवस्तुपूगैः तन्महापरिषदि महता यत्नेन
नोपस्थितिमतामप्यभ्युदितार्थमर्थयमानानामर्थपराभूतिरेवानुभा-
व्यमाना कथङ्कारं समवधानविवदनादिव्यापारमभ्युपेयात्फलवन्तम् ।
तत्राप्यमनोरथसिद्धावुत्तरोत्तरमुत्तराधरव्यापारधाराविषीदन्मनः-
प्रचारास्तत्र याता अप्ययातेतरमानुषसमाः सम्मीयन्ते । मण्डले-
शादिपदभाजां किलैतस्याः पराभूतेः "सम्भावितस्य चाकीर्ति-
र्म्मरणादतिरिच्यत" इति स्मृतिसम्मितायाः का वाऽधिकतरा
विपत्तिरित्यर्वाचीनजनापवादो दुरपास्तः । लाघवं चैषामेवमाद्यत्र
च तद्द्वीपवासिष्वच्छैव प्रसृमरम् । परोक्षलाघवस्य प्रत्यक्षलाघवा-
पेक्षया न्यूनसत्ताकत्वमानुभविकम् । तच्च विलम्बेन निजकार्य्य-

निर्वाणभाजनं सदविलम्बेन स्वकार्य्यनिर्वहणशीलस्य प्रत्यक्षला-घवस्य प्रतिप्रत्त्ययमनुभूतिचरत्वाच्च । दशतयादिपक्षैकदेशविजय-या च्छायामपि तदवयवबाहुल्यप्रसाधनप्रयुक्तपराजयजन्यापमानाप-नोदनकृते प्रकृतप्रयत्नप्रधानाग्रहे च त एते मण्डलाधिपाः सानु-भवम्पर्य्यनुयोक्तव्याः प्रथमं तावत्तथाहियेन्वद्यावधि द्वित्राः प-ञ्चषा वा ययुर्लण्डनराजधान्यामन्यासु वा प्रान्तभूमिकासु भार-तवर्षमाण्डलिकास्तदधिष्ठितपदाधिकारमर्य्यादायाह्यर्थतो रिरक्ष-यिषया तद्गमनारम्भोऽनुमातव्य उत स्वेतरसामन्तजनसामान्य-स्थित्यपेक्षया आहोस्विदुभाभ्यामप्युदासीनतया। न तृतीयः स्व-पदानुकूलप्रयोजनतृणया प्रेर्य्यमाणानां गुरुतरकार्य्यभागसंरम्भा-नामौदासीन्यस्यासम्भवतरत्वात् । न द्वितीयः "तत्स्थानापन्न-स्तद्धर्म्मं लभत" इत्यादिन्यायप्रकोपात् परिनिष्ठितनिजमर्य्यादो-ल्लङ्घनाच्च। २ नापि प्रथमः रिरक्षयिषायाः कर्त्तृत्वेऽपि तत्कर्मीभू-तवस्तुपरिकरोपादानवैकल्यातिभारस्य दुर्वहतरत्वात् परिकरास्तत्र स्वसत्ताऽनपहाराभिशाल्यभयसंवित्समाहारनिजराष्ट्रोपचितिमू-लीभूतासाधारणषाड्गुण्यविभावनादयः तेचाचक्रवर्त्तिन आच म-ण्डलाधीशेभ्यः समप्रकृतयः। उपसर्जनमुद्रयाऽसमशीलत्वेऽपि प्रधा-नमर्य्यादया समशीलतैव सम्राण्माण्डलिकयोः राजयुवराजवन्म-न्त्र्युपमन्त्रिवच्च। युवराज आराद्राजपदलिप्सयैव राजानमाजुषते नतु यावज्जीवं यावन्निजपरम्पराञ्च युवराजपदैकप्रतिष्ठित्यै प्रेष्य-भावाय च उपचयापचयवाचिककरणग्रामो हि तद्योगवियोगयोर्हेतुः "उद्योगः साहसं धैर्य्यं बुद्धिः शक्तिः पराक्रमः। षडेते यत्र तिष्ठन्ति तत्र देवोऽपि शङ्कते १ न साहसमनारुह्य नरो भद्राणि पश्यती"ति प्रेक्षावतामत्र निगमस्थानीये एव स्मृती "असन्तुष्टो द्विजो नष्टः स-न्तुष्ट इव पार्थिव" इत्यान्वीक्षिकी निगमश्च ततोऽप्यधिकतरसत्ताकः विस्मृतप्रायाहीयं निजधामनिजकर्त्तव्यतयोरुद्दीपकदीपमाला ति-

रस्कृता च भूयस्येव निजान्वयबीजिपरम्परापरिपालितसुबुद्धसा-
धुरीतिः निर्द्धूता च दिवस्पृथिव्योः समुद्दीव्यदादित्यरोचिरति-
शायिमन्वत्रिमैत्रावरुणिपराशरपाराशर्य्यादिमहर्षिप्रणेतृकस्मृति-
निबद्धराजतन्त्रधर्म्मतन्त्रयोस्तत्त्वसङ्गतिरशेषतः तत्रापि पिदधत्येव
केचिच्छ्रोत्रे श्रुतमात्रेणाक्षरद्वितयस्य श्रुतिरिति स्मृतिरिति धर्म इ-
ति वा बन्दिमागधभाट्टचारणास्तत्सभासु तत्त्ववेत्तारो महामुनयो
वेदब्राह्मणादिसपत्नभूताश्च । वर्णेभ्यो वैरायमाणभृतकवाचाटाः
पञ्चसप्तावरापरिषत् । समाह्वयद्यूतचतुरङ्गरमणादयस्समरमहो-
त्साहाः । एवमाद्यानन्दितचेष्टामात्रपर्य्याप्तनिजाधिकारचरितानां
किमुत तेषां सभासु सभास्ताराणां तत्त्वनिर्णायकवार्त्तानां वा
प्रत्याशा किमुत कृत्याकृत्यविमर्शचातुर्य्यसमुद्भूतनिजराष्ट्रसमृद्धिः
किमुत तत्प्रयोज्यः परेभ्यः पराभूतिभयाविकम्पः किमुत तेषां
व्यवहारधारान्यूनतापादकच्छिद्रानन्वीक्षाप्रयोजकाधिकारिणां—
तथाच "सन्दीप्ते भवनेऽपि कूपखननं प्रत्युद्यमः कीदृश" इत्यार-
म्भिनाभिस्थूलेक्षिकयाऽपि निजावेशवासनावासिततद्वीपोत्सर्पण-
प्रकरणं हि सव्रणमेव किन्न स्यात् निर्व्रणं चेद्विचारव्रज्यासु दि-
ङ्मात्रमुद्दारितासु प्रायोपवर्त्मप्रायासु किमित्यनाश्वासो विचारक-
जातीयानाम् । इत्थञ्च प्रतिरोधानुरोधसामग्रीकविचारणामहिम्ना
तत्पुरीयातायातप्रयासयोरन्यूनानतिरिक्तसत्त्वाकलमृतेनादृष्टार्था-
तिशयः कश्चिदनुभूतिपदम् अपितु दृष्टानन्तानर्थकरी शिष्टाकोप-
विभागिनी हि माण्डलिकप्रस्थानकथा सती ज्ञेयैकदेशसिविल्स-
र्विस्चिकित्सककलाविशेषलाभोद्योगसंवीतानामार्य्यवर्षीयविद्या-
र्थिनामुदितकलालब्धिसमापनान्यथाऽनुपपत्त्या तन्नगरीगतिवस-
तिचरतिरूपा अपि व्यापारा नान्तरीयका एवायतन्ते प्राचीनपक्षो-
क्तदूषणगणानामवयवभेदानां परामृश्यमाणत्वात् । अवयवेषु केषु-
चिदतिदेशकल्पनायामनतिदेशप्रत्यासत्तेरन्ततः समस्वभावनिदा-

४

नायाः सूक्ष्मेक्षिकासंसरणीयता सुग्रहैव । न च तेषां क्षीरकण्ठोपकण्ठपरिणामानां विद्यापयःपानसमेधमानप्रतिभाऽतिफलानामपरामृष्टबहिर्विक्षेपपक्षाणामुदितदूषणावलेपो न मनागित्याकलनीयम् । आबाल्यमा च यौवनापवर्गमनवच्छिन्नतद्भूम्यावासतल्लोकनिबिडसाङ्गत्यादिभ्यः परम्प्रतिपन्थिभूतेभ्यः स्ववर्णादिनिरूढप्रबन्धबन्धप्रभ्रष्टगतिकत्वादेरवधार्य्यमाणत्वादुत्तरोत्तरमतिवेलमवधारयिष्यमाणत्वाच्च एवञ्च प्रतिभाविपाकस्य तदीयस्यैवमात्मतायां पारम्पर्य्यप्रजास्वरूपविलोप एवाभ्याशीभवति भविष्यति चेति न नो विवादः परिपाकसमीक्षावताम् । नच पुनरिहैव वसतामालस्यादिसमास्कन्दितकरणकारकाणामनास्वादिताक्षरमाधुर्य्यमात्राणामद्विपात्माणिचेष्टासमशीलानां स्वीयतावेशसमाहरणसमुपेक्षया प्रभ्रष्टेष्वेव विद्याविशेषजन्मसु तेष्वादरो "गुणामान्यस्थानं गुणिषु नच लिङ्गं नच वय" इति प्रामाणिकवचोऽनुगृहीतो महाजननेतव्यः साधीयानिति युक्तमादर्त्तुम् । विद्याजन्मनो विशिष्टादरणीयतावत्त्वेऽपि व्यावहारिकगुणानां व्यावहारिकमानपदभाक्त्वेऽपि पारमार्थिकमान्यतरगुणव्यामिश्रीकरणस्याभ्यर्हिततरस्यालक्षीभवनात् तेषुतु मान्यगुणविरहित्वसाक्षात्करणेऽपि निर्योग्यतावत्त्वमेव नतून्मार्गयोग्यताकत्वादीति विशेषः तत्रापि तथात्वे ततोऽप्यधिकतरोपेक्षाविषयत्वस्य नियतत्वात् । उदीरितकलाभ्यः सम्पादनीयाभ्यस्त्वेतरसाधारणाभ्य आर्य्यमाहात्म्यैकान्त्यसङ्गोपनौपयिकाः किलासाधारणकलाः सर्वतो विशिष्यन्ते । तदासादनाशक्तावपि तद्गोचरास्तिक्यनास्तिक्याभावयोः श्राद्धिकव्यवस्थापरपर्य्यायाङ्कुरस्थानीययोस्तन्मानवगतयोः पर्य्यालोचनयापि तदादरांशो ज्ञातव्यः । उदाहृतकलाफलांशभोक्तृत्वस्य कलावत्स्वेवाविभाज्यदायतया पर्य्यवसन्नत्वेन तददायिनामन्येषां तद्विषयोदासीनभावो नान्याय्यः । सामाजिकसुखसाधनानामेव सततक्रियानिर्वाहक-

तया सामाजिकैः साधारण्येनादर्त्तव्यत्वात् । नह्यत्र तदापत्तिः उक्तिमात्राभी रञ्जयितव्यत्वावगमात् । नापि सकलानां तत्कलाफलप्रेर्य्यत्वेऽकला एवाल्पतरास्तामिस्त्वागमनिर्गमाः पर्य्यायेण शुष्येयुः अनागतनिरीक्षायामतिमात्रनिमित्ताया मनोरथप्रायत्वात् प्रागवदुत्तरकालमुक्तकलाभवनं भविता भरतवर्षमित्यत्र नहि किञ्चिच्चित्रम् । नहि भवितेति वा न कश्चिद्वदिता त्रिकालवेदी एतद्देशीया ह्येतत्कालीना एतावत्य एवंविधवीर्य्यविपाका इति न कुत्रापि कदाचित्केनचिन्नियन्तुं पार्य्यन्ते विभूतयः भगवद्भवसत्ताया अवाङ्मनसगोचरत्वादिति परमार्थः—इत्थञ्च माण्डलिकविद्यार्थिनोः पृथक्पक्षसमुत्थानेऽप्यनुगतसिषाधयिषासमभ्यञ्जितव्यूहवितानातानविधानविधया विरूपोद्गमनभाषिकाभाव्यया वैजात्याभावसङ्गहो न पृथक्प्रयत्नविशेषापेक्षीति समुद्रवाहनविहारम्लेच्छमेदिनीप्रस्थानप्रमुखा ह्यनुपादेया एव प्रयत्नाः पूर्ववत् । एतेन "राजा कालस्य कारण"मिति वाक्यस्य तत्तत्कालीनभूतजातनियतव्यवस्थानपरिपालनादिलक्षणसाक्षात्कर्त्तव्यतातिशयबोधकस्योच्छृङ्खलप्रवृत्तिप्रयोजकत्वं राजपदाभिधेयनिष्ठं नार्थः स्वच्छन्दप्रवृत्तिप्रसक्तौ नरेश्वरस्यापि "अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चाधिगच्छती"ति स्मृतेरकीर्त्तिनिरययातनयोः पात्रता गम्यते नातः परो दण्डः प्रथीयान् । "यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा । यो यत्र विहितो धर्मस्तत्र तं हि समाचरेत् । यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः । तथैव परिपाल्योऽसौ यदा वशमुपागतः । तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये । वर्त्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः १ सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्म्मतः २ अन्यायेनापि तं यान्तं येऽपि यान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैः

नृप" ३ इति मानवाद्याः स्मृतयो निजहितान्यनभिसन्धाय प्रजाहितैकपरम्परापरिप्राप्तनियमयोजनपुरस्सरनिर्द्वन्द्वनिर्णयविधानार्हतां तत्फलवत्तामुद्वर्त्तने निर्वर्णितापत्तिं च प्रतिजानते ससभ्यस्य राज्ञः—न मनाङ्निरङ्कुशता खलु नरेन्द्रमहेन्द्रस्याऽपि। साङ्कुशताया आगःपरम्परासन्धायकत्वस्य परस्सहस्रनिदर्शननिरूढस्य सर्वत्रैव प्रतिबद्धत्वात् निरङ्कुशंमन्याः सत्तां वा कामयमाना निखिला एव स्वभावदोषविशेषमपेक्ष्य त्रिलोक्यामिति न केवलं भूभुजामेव तदावेशदोषावतारः समधिगतप्रजासङ्घसत्ताऽतिशयानाम् । परमेष तेषां स्वरूपहान्यापादकतया कलङ्कस्थानमेव सन्निजराज्योपचयशशाङ्कराहुर्वा प्रतीयेत फलतः ।

नच नोदीरितस्मृतीनामद्यतनहूणमहाराज्ञीपरानुशासनसंगोपितभरतवर्षीयवर्तनाप्रागल्भ्यपरामर्शतस्तदौपयिकमहानिबन्धविद्युत्प्रभास्वरूपालोचनतश्च निर्वापितप्रायतया तद्विषयविषयपरमाश्वासप्रतिपत्तिः कार्य्यकारिणी निरङ्कुशशासनानां नियोगपर्य्यनुयोगानर्हाणामनतिशङ्कनीयत्वादिति वाच्यम् । त्रैकालिकविभूतिभराणाममानुषप्रतिभागभस्तिपूतमन्वादिमहर्षीणामलौकिकतीर्थंकरता सर्वज्ञकल्पताभ्यामशेषराजन्यप्रबन्धप्रणेतृमूर्द्धाभिषिक्तत्वे समुपभुक्तजगच्चक्रबाह्यान्तरयाथात्म्यमहौजस्त्वे च तदाद्यसंख्यातसार्वभौमसमुपभुक्तसमस्तजगतीतलैकदेशयोग्यताकानामधुनातनमहाराजपदभाजामनुदाहरणभूमित्वादापातरमणीयत्वादयोगयोग्यत्वाच्च तथा च मनुमान्धातृसगरसहस्रार्जुनपरशुरामरघुरामादयो विक्रमार्कपर्य्यन्तास्ततोऽर्वाचीना अपि केचित्सर्वथैव त्रिलोकीदेदीप्यमानगुणप्रभावास्सन्तः तदधीतविद्यास्सुविद्याः तदधिगतकलास्सत्कलाः तदुपभुक्तभोगा अनीदृशाः । तत्प्रवर्त्तितवर्त्मानः स्वस्त्ययनाः तदाराधितमानवा महिमभुवः तत्परिपठितवेदाः परमार्थाः तन्निर्द्धारितधारणाः सत्राणाः तदुपेक्षितविषयाः सविषार्थाः तद्धा-

षितभाषाः सुभाषाः तन्निन्दितवाचो दुर्वाचः तद्गर्हितकर्म्माणि कुकर्म्माणि तद्भावितभावाः सुभावाः तद्गोपितगरिमा सुगरिमा तदुदीरितलाघवं परिलाघवं तदाकलितक्रियास्सत्क्रियाः तदनादृतनरा दुर्नराः तत्प्रशंसितशासनं सुशासनम् तन्निबद्धनिबन्धाः सुनिबन्धाः तत्सेविता नद्यः सुनद्यः तदध्यासिताः पर्वताः सुपर्वताः तदध्युषिता भूमयः सुभूमयः तन्निगृहीतव्यवस्था दुर्व्यवस्थाः तदलक्षीकृतभूतयः कुभूतयः तदालम्बिताचाराः सदाचाराः तन्निर्वर्णितवर्णाः सुवर्णाः तद्व्याख्यातशास्त्रार्थाः सुशास्त्रार्थाः तदनुज्ञातभक्ष्यभोज्यपेयानि सुपेयानि तत्प्रतिषिद्धान्नानि दुरन्नानि तदनुष्ठितधर्म्माः सुधर्म्माः तत्संपादितज्ञानं सुविज्ञानम् तत्सिद्धान्तितताखण्डार्थज्ञानमेव मुक्तिमूलम् तदाराधितदेवता एव परदेवता एवमादीन्यसाधारणलक्षणान्यभियुक्तताप्रयुक्तान्यध्यवसीयन्ते तद्धर्म्मिसमनुगतानि तदुच्छिष्टचर्वणावन्त एवोत्तरोत्तराः नत्वनुच्छिष्टचरं प्रतिपद्यते चिन्तयतां किञ्चित् । अचिन्तावतां तु भायादेव नाना न तच्चासम्पन्नसामग्रीकतया कस्यचिदर्थस्य प्रसाधनायालम् यतस्तथाविधैरप्रयोजनैरप्रमाणैर्वा भवितव्यमर्थानुवृत्त्या एवञ्च भिन्नकालिकप्रजानियन्तृत्वेनानधिकृताधिकृतत्वं नरेश्वराणाम् नहि कालेन परिच्छिद्यमानोऽर्थः कालस्य कारणं राजादिरितरो वा कालकार्य्यत्वाविशेषात् तस्माद्राजा कालस्येति वाक्यमुक्तार्थमास्थेयम् । "अष्टाभिश्च सुरेन्द्राणा" मिति तु दर्शितमहागुणगरिष्ठानां मनुरघुरामादीनामितरेषाञ्च तदाद्यविप्रतिपन्नविभूतीनां नैःश्रेयसपदपर्य्यन्तसङ्गतीनामाभ्युदयिकीः सर्वा अपि वैदिकीः क्रिया निर्वर्त्तितवतामपर्य्याप्तकार्य्यसामान्यहीनानामेवानुवादकम् नत्वन्येषामापातगुणक्रियावतां सम्मोहनैकमार्गाणां कार्पण्याद्यपुरुषार्थसाधनसम्बद्धानामयतनानाम् अनाधेयातिशयगुणग्रामाणामाम्नायमौलिमन्दारसुमनःसौरभ्यसध्रीचीनानामपात्रत्वात् । यथाह श्रुतिः

"युवा स्यात्साधुयुवाऽऽध्यायिकः आशिष्ठो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्द" इति युवा प्रथमवयाः साधुयुवा युवाऽप्यसाधुर्भवति साधुरप्ययुवाभवतीति यूनो विशेषणमेतत् । आध्यायिकोऽधीतवेदः प्रधानसमस्तविद्योपलक्षणमेतत् आशिष्ठः आशाखृतमः द्रढिष्ठः द्रढतमः बलिष्ठो बलवत्तमः संग्रामेष्वविकम्पितजेता परेषामितियावत् । एवमाद्याध्यात्मिकशक्त्यतिशयसम्पन्नतदाद्यनन्यसाधारणलक्ष्मणस्तस्य सर्वाऽपीयं पृथ्वी सकलसागरपर्य्यन्ता वशे वर्त्तमाना वित्तस्य वित्तेन "व्यत्ययो बहुल"मिति स्मरणात्षष्ठ्यास्तृतीया विपरिणतिः पूर्णा सम्पन्नेत्यर्थः । अतिवृष्ट्यनावृष्टिपुरोगमानामीतीनामुपरोधपुरस्सरं रसातिशयशाल्योषधिसमृद्धेतियावत् । उक्ताशेषलक्षणसम्पत्सम्पन्नमानुषानन्दफलभाक् सार्वभौमः आनन्दानन्दिनोरभेदविवक्षायाः प्रकृतत्वात् शतगुणाधिकमुत्तरोत्तरमानन्दमाब्रह्मणो यावन्निरतिशयानन्दसमधिगमस्तावत्तं प्रकृत्य श्रोत्रियत्वावृजिनत्वाकामहतत्वसहचरितधर्म्मानुष्ठानप्रकर्षमहिम्ना मानुष्यादानन्दाच्छतगुणेनोत्कृष्टमनुष्यगन्धर्वादिहिरण्यगर्भपर्य्यन्तकामिकानन्दाप्तिपूर्वकनिरतिशयब्रह्मानन्दपरिप्राप्तिः प्रस्तूयते । श्रोत्रियत्वावृजिनत्वयोर्नियतयोरकामहतत्वमसाधारणं श्वेतच्छत्रमिव सम्राज इति गम्यते उत्तरोत्तरमुत्तमोत्तमपदप्रापकत्वयोग्यताविशेषकत्वात् तथाच श्रोत्रियत्वादित्रितयोपनीतत्वमृते सार्वभौमानन्दोप्यदृष्टचरएवेत्यद्यतनयथोपन्यस्तमहाराजे विषयस्यास्य विचारसहत्वात् तच्चरणसरोजयुगीं जुषमाणेष्वास्यनिरीक्षकेषु माण्डलिकेष्वलं तदलीकसम्भावनया भरतवर्षीयेषु ।

सार्वभौमस्वरूपविशेषस्योक्तगत्या विवेक्तव्यत्वे तच्छेषभूतविचारणाभिरकृतविग्रहाभिरेव भवितव्यमिति कोन्वत्रावाग्मी । सति चैवं व्योमकमलिनीसौरभसमाघ्राणसम्पत्तये सोपानपरम्परानि-

म्र्माणानुज्ञानवद्वीपान्तरीणनिरतिशयसौभाग्यभोगाय समुद्रयान-सन्ध्यादिहानमर्य्यादाम्लानपूर्वापमानविषयार्षानुज्ञानमचलं जज्ञ-न्यतां नाम । इदमेभ्यः कामं निजार्भकेभ्यो निर्देष्टव्यमेव किल यथेष्टाचरणं महर्षिभिः नते हन्त निरदिशन्नदूरदर्शिनः प्रातिनिय-तानन्तसाधनसाध्यभावविशेषस्वभावानभिज्ञानतयेत्येवंमन्यमानाः कथंताननुजानीयुर्यथाभूतव्यवस्थानिरूपकाः परशास्तारश्चेति वक्रगतिः तथा च तद्द्वीपयात्रादिन्न स्मृतिकारानुज्ञानविषये-त्यवधेयम् ।

सव्यसाचिमुखानाम्पाण्डवानामशेषमहीमण्डलगोचरो विजयः सम्प्रतिपन्नतर इत्यभ्युपगम्यते स हि साक्षात्समुद्रयानयवनविष-याभिगमनादिसाधनैकसाध्यः । सिद्ध्यति चानेन तदादेरुद्भवः त-थापि तयोर्निष्पादनप्रकारो विजिज्ञासितव्यः तद्विजयमहोत्साह-मूलश्च विजिज्ञासितव्यम् तत्कृतिसाध्यपरमापूर्वस्वभावश्च प्रत्ये-तव्यः—तथाहि "स्वाराज्यकामो राजसूयेन यजेते"ति विधिविहित-राजसूयमहायज्ञस्तत्र प्रस्तुतः स हि "द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभावित" इति भार-तस्मृत्याऽनुनिष्क्रान्ततरयोः प्रवृत्तिनिवृत्तिलक्षणयोः वैदिकमार्ग-योरन्यतरप्रवृत्तिपदजन्यबोधीयविषयताकोपस्थितसंस्थामहामणि-रैहिकसाम्परायिकनिस्सीमसौभाग्यजननः । एवञ्च लौकिका-लौकिकभूतिप्रकाण्डनियामकस्य यागस्यास्य दिग्विजयदृष्टप्रयोजन-गुणकतयोपसर्जनानुष्ठानकर्त्तव्यतायाः प्रकृतत्वे तदात्मनो विजय-स्योपजनापजनधर्म्मसहभाविनो वरुणालयविहारम्लेच्छविषयाभि-गमनसमरसन्नाहाद्यन्यादृशविन्यासवतोऽपि साधकतमत्वादेशतः प-रिग्रहात् । तेषां विजयक्रियाकर्म्मीभूताश्च सर्व एव नृपतिपदवाच्याः सन्तो व्यासज्यैव वशे नीयमानतया न पर्य्यायेण तत्तामर्हन्ति । व्यासज्यैव प्रयुज्यमानविजयक्रियाविषयत्वे कक्षाक्षय्यमुक्छलभ-

सम्पातनयेन यवनहूणादिभूपपटलीनामप्यानुषङ्गिकतया प्रधानप्रत्यासत्त्या किल साक्षात्सम्बद्धतया वा गृहीतव्यत्वेन न व्यस्तप्रयत्नापेक्षी यवनादिविजय एकक्रियासमङ्गभावापन्नत्वाद्व्यासज्यफलाभियोगव्याकीर्णानामनन्यसत्ताकत्वस्य स्थितत्वाच्च । विजयोद्योगव्यवसितमतीनां हि पाण्डवानां प्रकृष्टतमयागक्रियापरिचोद्यमानतया तपोमयमूर्त्तितया च निजधर्म्मानुपमर्दपूर्वं म्लेच्छदेशेऽपि निराबाधा स्थितिरासीदित्येवेत्यर्थसिद्धम् । सांग्रामिकसकलसम्भारसंयुतत्वे प्रधानसम्भाराणामसङ्कोचो निर्विवादः सेनादयोऽत्र सम्भाराः सैनिका हि प्रायः क्षत्रिया एव ते च लक्षशः कोटिशश्च संख्याताः नाल्पे कथञ्चित् समस्तास्ते शुचिशीलाः शुचिव्रताश्च नाणुतरमपि धर्म्मविलोपं सहमानाः शयनासनस्नानसन्ध्यादिनिजधर्म्मा न लोपिताः अभक्ष्यभक्षणं नोपात्तम् अपेयपानमनादृतम् जातिभ्रंशकरक्रियाणां प्रत्युत निग्राहकतया कथं तासामंशतो वा पुरःस्थितिः विजयिनां हि तेषां विक्रमैकस्वभावतया प्रधानधर्म्मांशे कथम्प्रमदनम् नौकाश्च स्वीयाः कैवर्त्तकाश्च भरतवर्षीयकैवर्त्तकजातीयाः क्षत्रियादिभिन्नजातीयानां भिन्ना एव नावो निवेशनाय शाकफलभक्षा एव नावि वर्णतः समानानामेव समवायो निजाङ्गणे असमानानामसम्पर्कः क्रियाकालेषु भक्ष्याद्यर्थाः समुचितविन्यासाः पानीयं च यथोक्तमर्य्यादम् अवतरणस्थानान्यन्तिकान्तिकतराणि सलिलाशयाश्च स्वायत्ताः प्रत्युत स्वाधीनखननाश्च यतो निजधर्म्मा निरन्तराया उन्नेयाः म्लेच्छाद्यावसथेष्वनावासः तदुपभुक्तकूपादयस्सुतरां नोपभुक्ताः जनपदनगरादीनां प्रान्तभूमिकासु नियतवसतयः तत्रत्योपादेयधान्यादय एवोपभुक्ताः तत्कृत्यानुकृतिर्नाकारि तद्गौरवधिषणा नाग्राहि एवमनुकूलाचारैकचारितया दुराचारसंश्लेषलवोऽप्यकृतस्थानः धर्म्महानिशङ्का अप्यनवकाशाः नियतिबाधकाक्षेपा अप्यस्थानिनः

नीतिहारकवृत्तियोगानिरागारा: दोषदायकदुःस्थितयो दुरूहाः वेषरोषकविकल्पा अप्यकल्प्याः बुद्धिभेदकपारवश्यश्चानाश्रयमित्यादयोऽप्युचिततरमहत्ताकपाण्डवानां समुद्रयानम्लेच्छविषयाभिगमनतद्विषयपर्य्यटनकालीन यथोक्तस्थितिगतिपर्य्यालोचनया प्रभूतप्रभुत्वौपयिकामानुषशौर्य्यवीर्य्याद्युज्जृम्भिततया च तेषां सर्वतोव्यावृत्तस्वरूपविशेषत्वेनानुदाहरणतरत्वात्। संज्ञयाऽविरूपार्थप्रतिपत्त्यवभासे वस्तुतः पाण्डवादीनां विक्रमादित्यपर्य्यन्तानां राज्ञां प्रधानयज्ञोद्देशतदुपसर्ज्जनीभूतविजयोत्साहसमुद्रयानम्लेच्छदेशप्रस्थानादीनामन्यादृशस्वरूपाणां धर्म्मप्रच्यवनशङ्कापराहतानामनुसन्धातव्यतरत्वे च तदादौ किमिति तदधिष्ठितत्रिलोकीरोरुच्यमानतपोविभवदिव्यास्त्रविद्याविभूतीनामनन्यलभ्यानां नोदाहरणता विशिष्टप्रतीतेर्विशेषणविशेष्यप्रतीतिपूर्वकत्वनियमात्। नहि नीलादिविशेषणप्रतीतिमुपमृद्य विशिष्टोत्पलादिकं स्वरूपतः कुत्रचित्प्रतिपद्येमहि प्रतिपद्यमानं वा सत् स्वेतरव्यावृत्तियोग्यताभाववत्त्वमपबाधेमहि। न पश्चात्तना विक्रमादित्यान्म्लेच्छदेशगमनमादृतवन्तो बाहुजाः गतवन्तोहि प्राञ्चो महाराजा एव विजयार्थं ससैनिकाः तदप्युदाहृतप्रसङ्गसजातीयमुपाददानाः साक्षाद्विजयक्रियाविधानमातन्वतेस्म इतिकर्त्तव्यताविशेषमनुजिघृक्षन्तः कल्पान्तरप्रसक्तिमापातप्रयोजनवतीं प्रतिसन्दधाना यथासम्भवमाचरन्तिस्म उदासतेस्म च धर्म्माभ्युदयाभ्युच्चयापनोदिसङ्गत्यपेक्षया यतस्तदभ्युच्चयैकत्रैकालिकफलोपजीव्याः सर्व एवैते यथोपपन्नवर्णाश्रमाचारनिष्कृष्टपरिपालनायत्तकरणत्रयाश्चानुचरमनुजाश्चाराश्च तदीयाः नतु जग्मुर्ब्राह्मणा विशिष्टलक्षणाः सामान्यलक्षणा वाऽभियुक्तनियुक्ताः। अभियुक्तेतरनियुक्तनानाकर्म्माणो जघन्ययोग्यतामेवापन्ना न निग्रहानुग्रहव्यवस्थामर्हन्तिस्मेति ते तु नोदाहार्य्याः यतो विप्रतिषिद्धचेष्टाविशिष्टाः शिष्ट-

मर्य्यादा अतिशेरतेस्म । तादृशमानुषपर्य्यटनविषयजम्ब्वादिभेदभिन्नद्वीपान्तरवर्त्तिजनपदादिष्वावाससुवासकुवासप्रयुक्ताः किंलाख्यायिकाविशेषाः साम्प्रतिकाऽर्य्ययवनहूणादिभेदभिन्नशोधकजनोदाहृतेभ्यो ह्यैतिह्येभ्योऽवगम्यन्ते उदाहरणप्रत्युदाहरणैस्तेषु विश्वासातिशयमुत्पादयन्तः प्रगल्भन्ते च । परमत्र यथोपन्यस्तलक्षणानां किल मानवानां चातुर्वर्ण्यान्तर्वर्त्तितया प्रकृतत्वेपि न तद्गोचराख्यायिकाकलापाः स्थितं न्यायं बाधितुमुत्सहन्ते लिङ्गानि हि केवलान्याभाससहकारिसाधनसहस्रैरार्य्यव्यवहारच्छायानुवर्त्तनमापादयन्ति सन्ति न शक्तानि विशिष्टार्थमेकं वासद्धेतुसम्पादनाधीनमनुकूलस्मरणाद्युपेतमनुभावयितुं विचारकविचारणापेक्षया ।

नच पुनः पुरातनचक्रवर्त्तिवेलास्वापन्नप्रसङ्गवशान्तु चीनारबस्थानपारसीकादिषु यथोदाहृताऽऽर्य्यवर्षीयतया ब्राह्मणादिजातीयतया चोल्लिखिताभिधानवतामधिगतव्यक्तिविशेषाणां कतिपयदेशीयग्रामेषु शिवालयशिलाफलकताम्रफलकादिचिन्हेभ्योऽस्मार्त्तकालीनावासातिशयस्य तद्देशेषु व्यक्ततया समुद्रयानद्वीपान्तरगमनाद्यनाधुनिकमाचारसिद्धं चेति वाच्यम् । अस्थितोदाहरणविशेषाणामवभासयितव्यत्वेऽपि स्थिततरोदाहरणविशेषस्य मृग्यतेत्युक्तोत्तरत्वादन्वयव्यतिरेकाभ्यामुदितयानगमनयोरन्याय्यताया असकृदावेदितत्वात्पाण्डवादिविषयदृष्टान्तभेदस्य राजसूयादीतिकर्त्तव्यताविशेषप्रयोज्यात्यासन्नविजयक्रियाम्प्रत्यभ्युपायमात्रतया "यावद्वचनं वाचनिक"मिति तज्जातीययोग्यतावतामेव तयोरधिकृतत्वाच्च । न चाञ्जसैव महायज्ञाङ्गतयाऽऽप्यत्वे वैदिकत्वस्यैव प्रतिपत्तिक्रियावदास्थेयत्वे च तयोर्वैधत्वमर्थप्राप्तमेवेति किमिति मुधावाग्वादो विबुधानामपीति वाच्यम् सर्वस्यास्य यथोक्तमहायज्ञाङ्गतयेष्टापत्तेरितरत्रैव तयोरप्रामाणिकत्वात् ।

ननु भुज्युप्रभृतीनां राजर्षिकुमाराणामितरेषाञ्चोपादेयचरितानां रत्नाकरयानद्वीपान्तराभिगमनयोः “तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः । तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः १ तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः । समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः २ अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे यदश्विना । ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम्” ३ इत्याद्याभिरृग्भिर्विस्पष्टप्रतीतिगोचरतया वैदिकत्वमपरिहार्यमिति चेन्नैवम् । अश्विनीकुमारतदभिध्यातृभुज्य्वादिमाहात्म्याभ्युच्चयैकप्रतिपादनपरत्वादृचां हि तासाम् । नचामूषां संहितान्तरालवर्त्तितया माहात्म्यमात्राभ्युपगमे “वनस्पतयस्सत्रमासत । सर्पाः सत्रमासते”त्यादिवत्स्तुतिपरिपाकायमाणप्ररोचनामात्रकर्त्तव्यताज्ञापकतया स्वतःप्रामाण्याभावबलेनार्थवादवाक्यतायाः सिद्धत्वेच न वैतानिकासु क्रियासु विनियोगविशेषः कल्पसूत्रप्रणेतृको न्याय्य इति युक्तमभिधातुम् । वनस्पतयस्सत्रमासतेत्यादीनां वनस्पतयो नामाचेतनास्सत्रमुपासितवन्तः किम्पुनः श्रोत्रिया अनूचाना इत्याद्यन्यादृशप्ररोचनानिर्वाहकताया युक्तत्वेऽपि “वायुर्वै क्षेपिष्ठा देवते”त्याद्यर्थवादवाक्यानां यद्यपि क्रियाप्रवर्त्तकताऽवगम्यते क्रियासम्बद्धत्वं वा किञ्चित् तथापि “वायव्यं श्वेतमालभेत भूतिकाम” इति सन्निहितविध्युद्देशेनैकवाक्यतामापन्नानामन्यादृशस्वभावतयैवोपपत्त्या यथोक्तप्रयोगविशेषाणामारूढतयैवोपपत्तेः। एवञ्च भुज्युकर्त्तृकसमुद्रयानयोग्याख्यायिकाया ऋग्विशेषसम्प्रतीतायाः कथंचिद्यथोक्तदिशा युक्तत्वसम्भावनायामपि न वैधतया ग्रहणार्हत्वमुपपद्यते चोदनाया असम्भवात् “चोदनालक्षणोर्थो धर्म” इत्येव धर्मस्वरूपावधारणाच्चोदनाविरहवत्वमधर्म्मताया एव नियमने तन्त्रम् । ऋचाञ्च तिसृणामैदम्पर्यलक्ष-

णमास्थायैव व्यवस्थानमथोप्यादृतान्वयद्रढिम्नेऽवगमयितव्यस्स यथा "तुग्रो नामाश्विनोः प्रियः कश्चिद्राजर्षिः सच द्वीपान्तरवर्त्तिभिश्शत्रुभिरत्यन्तमुपद्रुतः सन्तेषाञ्जयाय स्वपुत्रं भुज्युं सेनयासह नावा प्राहैषीत् । साच नौर्मध्ये समुद्रमतिदूरं गता वायुवशेन भिन्नाऽऽसीत् तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव तौ च स्तुतौ सेनयासहितमात्मीयासु नौष्वारोप्य पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुः । अयमर्थः इदमादिकेन तृचेन प्रतिपाद्यते हशब्दः प्रसिद्धौ तुग्रः खलु पूर्वं शत्रुभिः पीडितः सन् तज्जयार्थमुदमेघे उदकैर्मिह्यते सिच्यत इत्युदमेघः समुद्रः तस्मिन्भुज्युमेतत्संज्ञम्प्रियम्पुत्रमवाहाः नावा गन्तुम्पर्यत्याक्षीत् । तत्र दृष्टान्तः ममृवान् म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यो रयिं न यथा धनम्परित्यजति तद्वत् हे अश्विनौ तञ्च भुज्युम्मध्येसमुद्रं निमग्नं नौभिः पितृसमीपमूहथुः युवाम्प्रापितवन्तौ । कीदृशीभिः आत्मन्वतीभिः आत्मीयाभिः युवयोः स्वभूताभिरित्यर्थः । यद्वा धृतिरात्मा धारणवतीभिरित्यर्थः । अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः अपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिः अप्रविष्टोदकाभिरित्यर्थः १ हे नासत्यौ सेनयासहोदके निमग्नम्भुज्युं तिस्रः क्षपाः त्रिसंख्याका रात्रीस्त्रिरहस्त्रिवारमावृत्तान्यहानि चातिव्रजद्भिरतिक्रम्य गच्छद्भिरेतावन्तं कालमतिव्याप्य वर्त्तमानैः पतङ्गैः पतद्भिस्त्रिभिस्त्रिसङ्ख्याकै रथैरूहथुः युवामूढवन्तौ । केतिचेदुच्यते समुद्रस्याम्बुराशेर्मध्ये धन्वन्धन्वनि जलवर्जिते प्रदेशे आर्द्रस्योदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च । कथम्भूतै रथैः शतपद्भिः शतसङ्ख्याकैश्चक्रलक्षणैः पादैरूपेतैः षळश्वैः षड्भिरश्वैर्युक्तैः २ हे अश्विनौ अनारम्भण आलम्बनरहिते समुद्रे तत्कर्मावीरयेथा विक्रान्तं कृतवन्तौ युवां । अनारम्भणत्वमेव स्पष्टीकरोति अनास्थाने आस्थीयतेऽस्मिन्नित्या-

स्थानो भूप्रदेशः तद्रहिते स्थातुमशक्ये जल इत्यर्थः । अग्रभणेऽग्रहणे हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन्नित्यर्थः । किम्पुनस्तत्कर्म्म भुज्युं समुद्रे मग्नं शतारित्रां बह्वरित्रां यैः काष्ठैः पार्श्वतो बद्धैर्जलाऽऽलोडने सति नौश्शीघ्रं गच्छति तान् परित्राणि ईद्दशान्नावमातस्थिवांसमास्थितवन्तमारूढवन्तङ्खलाऽस्तङ्गहनामैतत् पितुस्तुग्रस्य गृहम्प्रति यदूहथुः तत्प्रापणमन्यैर्दुश्शक्यं युवां समुद्रमध्ये कृतवन्तावित्यर्थः ३ अन्यैरपि भुज्युविजातीयकामनावद्भिः पेदुकक्षीवद्गोतमात्रिच्यवनवन्दनादिमहर्षिभिरभिध्यातृभिरभ्यर्थितावश्विनौ तज्जातीयानुग्रहविशेषैरनुगृहीतवन्तावित्युत्तराभिः प्रतिपाद्यत एवर्ग्भिस्ता यथा "यमश्विना दधथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति। तद्वां दात्रम्महिकीर्त्तेऽन्यम्भूत्पै द्वो वाजी सदमिद्धन्यो अर्यः १ युवन्नरा स्तुवते पज्रियाय कक्षीवते अरदत्तम्पुरन्धिम् । कारोतराच्छफादश्वस्य वृष्णः शतङ्कुम्भां असिञ्चतं सुरायाः २ हिमेनाग्निं घ्रसमवारयेथाम्पितुमतीमूर्ज्जमस्मा अधत्तं ऋवीसे। अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ३ परावतन्नासत्या नुदेथामुच्चाबुध्नं चक्रथुर्जिह्मवारं। क्षरन्नापोन पायनायण्ये सहस्राय तृष्यते गोतमस्य ४ जुजुरुषो नासत्योतवव्रिम्प्रामुञ्चतं द्रापिमिव च्यवानां । प्रातिरतञ्जहि तस्यायुर्दस्रादित्पतिमकृणुतङ्कनीनाम् ५ तद्वां नराशंस्यं राध्यञ्चाभिष्टमन्नासत्यावरूथं । यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्धनाय ६ तद्वांनरासनयेदं स उग्रमाविष्कृणोमि तन्यतुर्नवृष्टिं । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रदयीमुवाच" ७ आसामयमर्थः पेदुर्नामकश्चित्स चाश्विनौ तुष्टाव तस्मै प्रीतौ कश्चिच्छ्वेतवर्णमश्वं दत्तवन्तौ स चाश्वस्तस्मै प्रौढञ्जयश्चकारेति एतदत्र प्रतिपाद्यते । हे अश्विनौ युवाम्मघाश्वाय हन्तव्याश्वाय पेदुनाम्ने राजर्षये यं श्वेतवर्णमश्वं ददथुः दत्तवन्तौ सोऽश्वस्तस्मै स्वस्ति जयलक्षणम्मङ्गलं शश्वदित् नित्यमेव चकार । वां

कीर्त्तनीयम्प्रशस्यम्भूत् अभूत् तस्मात् पद्वः पदाः सम्बन्धी पतन-शीलः शीघ्रगामी वार्यः शत्रूणाम्प्रेरयिता युद्धेषु प्रेरयितव्यो वा वाजी वेजनवान् सोऽश्वः सदामित् सदैव हव्योऽस्माभिरथाह्वा-तव्यः १ कक्षीवान् ऋषिः पुरातमसा तिरोहितज्ञानस्सन् ज्ञाना-र्थमश्विनौ तुष्टाव तस्मा अश्विनौ प्रभूतां धियं दत्तवन्ताविति तदाह हेनरा नेतारावश्विनौ युवं युवां पज्रियाय पज्रा इत्यंगिरसामाख्या "पज्रावा अंगिरस" इत्याम्नातत्वात् तेषां कुले जाताय कक्षीवते कक्ष्या रज्जुरश्वस्य तद्वते तत्संज्ञाय स्तुवते युवयोः स्तुतिं कुर्वते म-हाम्पुरन्धिम्प्रभूतां धियं बुद्धिमरदत्तं व्यलिखतं यथा सर्वार्थगो-चरा भवति तथा कृतवन्तावित्यर्थः । अपिच कारोत्तरात् कारो-त्तरोनाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन्सुरायाः स्रावणं क्रियते लुप्तोपममेतत् । कारोत्तराद्यथा सुरायाः सम्पादकास्तान् स्रावयन्ति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयाश्वस्य श-फात् खुरात् सुरायाः शतं कुम्भान् असङ्ख्यातान् सुराघटानसि-ञ्चतं अक्षारयन्तं । यद्वा सिञ्चतिः पूरणार्थः कारोत्तरस्थानीया-द्युष्मदीयाश्वखुरात् या सुरा प्रवहति तयाऽसङ्ख्यातान् घटानसि-ञ्चतं अपूरयतं ये जनाः सौत्रामण्यादिकर्म्माणि युष्मद्यागाय सुरां याचन्ते तेषामित्यर्थः २ अत्रिमृषिमसुराः शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निना बाधिषत तदानीं तेन ऋषिणा स्तुतावश्विनाव-ग्निमुदकेनोपशमय्य तस्मात्पीडागृहात् अविकलेन्द्रियवर्गं सन्तं नि-रगमयतामिति तदेतत्प्रतिपाद्यते हे अश्विनौ हिमेन हिमवच्छीतेनो-दकेन घ्रंसन्दीप्यमानमत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निमवारयेथां युवां निवारितवन्तौ शीतीकृतवन्तावित्यर्थः । अपि च अस्मा असु-रपीडया कार्श्यं प्राप्तायात्रये पितुमतीं पितुरित्यन्ननाम अन्नयुक्त-मूर्ज्जं बलप्रदं रसात्मकं क्षीरादिकमधत्तं पुष्ट्यर्थं प्रायच्छतं ऋ

वीसेऽपगतप्रकाशे पीडायन्त्रगृहेऽवनीतमवाङ्मुखतया सुरैः प्रापितमत्रिं सर्वगमं गणं गणः समूहः सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः तस्माद्गृहादुद्गमय्य युवां स्वगृहम्प्रापितवन्तौ । यद्वा हिमेन शीतेन वृष्ट्युदकेनाग्निमग्निवत्तीक्ष्णं घ्रंसं अहर्नामैतत् सामर्थ्यान्निदाघकालीनमहरवारयेथां तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ । अपिच अस्मा अग्नये पितुमतीश्चरुपुरोडाशादिलक्षणान्नोपेतमूर्ज्जम्बलकरं रसात्मकमुपस्तरणाभिधारणात्मकं घृतमधत्तं वृष्ट्युत्पादनेनाग्नेर्यागार्थं हवींषि निष्पादितवन्तावित्यर्थः । ऋबीसेऽपगततेजस्के पृथिवीद्रव्येऽवनीतमोषधीनामुत्पादनायावस्तान्नीतं पार्थिवाग्निना परिपक्वावुदकेन क्लिन्नाद्योषधिवनस्पतयो विरोहन्ति अत्र हविषामत्तारमोषधिवनस्पत्यादीनां वा एवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ युवां स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ कारणात्मना पार्थिवाग्नौ वर्त्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रकर्षेण व्यक्तीकृतवन्तावित्यर्थः । अयम्पक्षो यास्केन "हिमेनोदकेने" त्यादिनोक्तः ३ कदाचिन्मरुभूमौ वर्त्तमानस्य स्तोतुर्गोतमस्यर्षेः समीपं देशान्तरे वर्त्तमानं कूपमुत्खायाश्विनौ प्रापयतां प्रापय्य च तं कूपं स्नानपानादिसौकर्य्यायोपरिमूलमधोबिलमवस्थापयतामिति तदेतदाह—हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा एतत्संज्ञावश्विनौ युवामवतं कूपनामैतत् अवस्तात्ततं कूपं परानुदेथां गोतमस्यर्षेः समीपे प्रेरिषाथां तदनन्तरं तं कूपमुच्चाबुध्नं उच्चैरुपरिष्टाद्बुध्नो मूलं यस्य स तथोक्तः जिह्मवारं जिह्ममधस्ताद्वर्त्तमानं तथा वक्रं वारं द्वारं यस्य स तथोक्तः एवंगुणविशिष्टं चक्रथुः युवामकृषाथां तस्मात्कूपात् तृष्यते पिपासतो गोतमस्य पायनाय पानार्थमापोन आपश्च अयं नोशब्दश्चार्थेऽक्षरं प-

वाहरूपेण निरगमं । कीदृशस्य राये हवींषि दत्तवन्तः सहस्राय सहनशीलाय यद्वा सहस्रसङ्ख्याकाय राये धनाय एतत्सङ्ख्यधनलाभार्थं चाक्षरम् ४ वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तः च्यवनाख्य ऋषिराश्विनौ तुष्टाव स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्य्यौवनमकुरुतामिति तदेतदाह हे नासत्यावश्विनौ जुजुरुषो जीर्णात् च्यवनात् च्यवनाख्यादृषेः सकाशात् वव्रिं कृष्णं शरीरमावृत्यावस्थितां जरां प्रामुञ्चतं प्रकर्षेणामोचयतं । तत्र दृष्टान्तः द्रापिमिव द्रापिरिति कवचस्याख्या यथा कश्चित्कवचं कृत्स्नशरीरव्याप्तं धृत्वा पश्चाच्छरीरात्पृथक्करोति तद्वत् उत अपिच हे दस्रा एतत्संज्ञौ दर्शनीयावश्विनौ जहि तस्य पुत्रादिभिः परित्यक्तस्य ऋषेरायुर्जीवनं प्रातिरतं प्रावर्धयतं प्रपूर्वस्तिरतिर्वर्धनार्थः आदित् अनंतरमेव युवानं सन्तं कनीनां कन्यानां पतिम्भर्त्तारमकृणुतं अकुरुतं ५ बन्दनोनाम कश्चिदृषिः सचासुरैः कूपे निखात उत्तरीतुमशक्नुवन्नश्विनावस्तौत् तमश्विनौ कूपादुन्निन्यतुरिति तदाह । नरा अयोग्यस्य नेतारौ हे नासत्यावश्विनौ वां युवयोः सम्बन्ध्यभिष्टिमदभ्येषणयुक्तमाभिमुख्येन प्राप्तव्यं तथा वरूथं वरणीयं कामयितव्यं तत्कर्म शंस्यं अस्माभिः प्रशंसनीयं राध्यं आराधनीयञ्च किम्पुनस्तत्कर्म विद्वांसो जानन्तु युवां निधिमिव निक्षिप्तं धनमिवापगूळ्हमरण्ये निर्जने देशे कूपमध्येऽसुरैर्निगूढं वन्दनाय वन्दनमृषिं दर्शतादध्वगैः पिपासुभिर्द्रष्टव्यात्कूपादुदूपथुः उदहार्ष्टं एवं यदेतत्कूपादुद्धरणं तदित्यर्थः ६ इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच ततोऽश्विनावश्वस्य शिरश्छित्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राऽश्व्यं शिरः प्रत्यधत्तां तेनच दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास तदिन्द्रो ज्ञात्वा व-

|562|

तिपाद्यते हे नरानरावश्विनौ वां युवयोः सम्बन्ध्युग्रमुद्गूर्णमन्यैर्दु-
श्शकं दंशः कर्मनामैतत् युवाभ्यां पुरा कृतं तत्कर्म्म सनये धनलाभा-
र्थमाविष्कृणोमि प्रकटीकरोमि। तत्र दृष्टान्तः तन्यतुर्न यथा मेघस्थः
शब्दो वृष्टिं मेघान्तर्वर्त्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत्
किं तत्कर्म अथर्वणः पुत्रो दध्यङ् एतत्संज्ञऋषिरश्वस्य शीर्ष्णा युष्म-
त्सामर्थ्येन प्रतिहितेन शीर्षा वां युवाभ्यां मीमिमां मधुविद्यां यद्व
यदाखलु प्रोवाच प्रोक्तवान् तदानीमश्वस्य शीर्षःसंधानलक्षणं
पुनर्मानुषस्य शीर्षःप्रतिसन्धानलक्षणञ्च यद्भवदीयं कर्म्म तदा-
विष्कृणोमीत्यर्थः ७–एवञ्चात्र भुज्य्वादीनामश्विनोर्ध्यातृध्येयभा-
वात्मन्यनुग्राह्यानुग्राहकभावात्मनि च सति सम्बन्धेन हि कार्या-
न्तरापादनलक्षणः कश्चिद्ग्रहणमर्हति सम्बन्धः। एतेनापद्भिरभिभू-
तानामलौकिकसामग्र्या एव सिद्धासमाश्रयितव्यता सा हि देवता-
संराधनलक्षणा नत्वर्वाचीना यथायथमापद्यमाना तस्याऽप्यापत्ति-
स्वाभाव्यात्। नह्युपप्लवस्वभावं वस्तूपप्लवेभ्यः स्वभूतेभ्यः पर्य्याप्तं
मोचनाय जातुचित् नहि दारुधियाऽऽरूढो ग्राहो नद्याः पारं नेता
अपित्वत्तैवारादारोहसाहसिनः श्लाघनीयप्रज्ञस्य। उदाहृतजलधि-
यानादिकर्म्मणां भुज्य्वादिकर्त्तृकाणामुपासनामात्रप्रकरणपरिपठि-
तत्वात्प्रकरणेनानेन लक्ष्यमाणार्थकात्स्न्र्यमप्राकरणिकमस्पृशदेव
निजाभियोगमायतते मुख्यार्थलक्ष्यार्थयोरादिमस्यैव स्वरसवाहि-
प्रवृत्तिगोचरतया तदुपस्थापकसामग्रीविशेषस्यास्थानित्वे स्थानित्वे
च द्वितीयोपस्थापकसामग्र्यास्तामनुकूलीकृत्यैव प्रथमः प्रतीतियो-
ग्यतामश्नुते। स हि नकथञ्चिद्व्यथयितव्यो वस्तुगतिं विमृशद्भिर्वि-
चारकवरैः–तथाच भुज्य्वादयो बाहुजा द्वीपान्तरीयराजानां वि-
जयायैव जग्मुरित्यालम्ब्यापि प्रकृतार्थमन्यार्थपर्य्यवसायितयाऽनु-

दाहरणरूपमेव तदिति ताभिरेवर्ग्भिरध्यवस्यामः सुतराम् "जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्नि"रित्यस्यामृचि नावेव सिन्धुं यथा कश्चित् कर्णधारो ग्राहादिभिर्दुष्टसत्वैराकुलितां नदीं नावा तारयति तथा जातवेदा अरातियतोऽरातिं शत्रुमिवास्मानाचरतः शत्रोर्वेदो धनं निदहाति नितरां दहतु भस्मीकरोतु। अपिच सोऽग्निर्नोऽस्मान् विश्वा विश्वानि सर्व्वाणि दुर्ग्गाणि दुर्गमानि भोक्तुमशक्यानि दुःखान्यतिपर्षत् अतिपारयतु अतिक्रम्य दुःखरहितं सुखम्प्रापयतु इति गम्यमानदृष्टान्तदार्ष्टान्तिकस्वरूपपर्य्यालोचनया नदीनौकायाः सम्बन्धोऽधिगम्यते। नतु समुद्रनौकायाः पारावारतरणतारणयोग्यताया दुःशकत्वात्।

यद्यपि वीरवर्म्मशङ्करवर्मयशोवर्मललितादित्यकान्यकुब्जकल्याणशर्मविजयसिंहादीनामशेषद्वीपसञ्चरणादयो द्वारभूतसमुद्रेणैव सम्पन्नाः ब्राह्मणैर्वाणिज्यजीविभिरधिष्ठितास्सुमत्राचीनजावादिदेशयात्रोपायभूताः किलोल्लिखिता नावस्तदानींतनाः देशेषु तेषु दीर्घावासोऽपि तेषामनुक्रान्तः तत्र तत्स्थापितास्संतस्समयान्तरे निराश्रयाश्शिलाप्रतिमाः शिवगणेशदुर्गादीनामद्यापि सन्दृश्यन्ते हि संग्रहागारे होलंडीयलैडेन्नगरे तत्सञ्चरितस्थानान्यद्यावधि लक्षणैरितरैरपि कैश्चिदुद्वीक्ष्यन्ते द्वीपान्तरेषु संस्कृतवर्णा ग्रन्था वा भारतादयो दृष्टप्राया इत्यादिबहु चात्र चोदितव्यमवगम्यते तथाप्यव्यवस्थितचरमदृष्टान्तोचितमिति न्यायात्तु व्यवहाराः पर्य्यालोचनीयाः प्रमेयप्रतिष्ठित्यै परिशुध्यै च। येच यथोक्तब्राह्मणा द्वीपान्तरं गन्तारो नते महापुरुषावेदपुरुषाच्छन्दःपुरुषा वा अपितु शरीरपुरुषा एव यथा चैतरेयश्रुतिः "चत्वारः पुरुषा इति बोध्यः शरीरपुरुषश्छन्दः पुरुषो वेदपुरुषो महापुरुष इति"—एवञ्चेन्द्रियारमणपरप्रयोजनैकपरिप्रेरितात्मनां हि श-

रीरपुरुषाणां जघन्यकोटिकतया न तदनुष्ठितक्रियानन्वितरेषां त्रयाणां पुरुषाणां कर्म्मसूपपद्यन्ते प्रामाण्यनिर्वहणाय । असमशीलत्वादितरेतरम् समशीलानाञ्च ता अतद्रूपा एवेति प्रत्युत स्वपक्षप्रतिष्ठानाय पर्याप्ता निगद्यन्ते परपक्षबाधनाय च। तेषाम्वा द्वीपान्तरमुपासितवतां का नु दशा संवृत्तेति प्रस्तुतदशामनुसन्दधानैरनुसन्धातव्यमासमन्तात् तेनच न किञ्चिद्व्यवस्थितमर्य्यादमधुनातनप्रवृत्तिप्रयोजकमालक्ष्यते प्रवर्त्तनं तदीयं यतो माभवत्वेव तेषामुदाहरणप्रयासावतारोऽमीषामायुष्मताम् । महाजनोदाहरणं तूपादीयमानमर्थायैव भवन्न निवार्य्यते क्रियास्वात्मीयासु। तेच निरूपितस्वरूपाभुज्व्यादयोऽर्ज्जुनादयो विक्रमादित्यादयश्च।

अथ "भिन्नं सिक्तं वाऽभिमन्त्रयेत् समुद्रम्वः प्रहिणोमि। स्वां योनिमपि गच्छत अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपतौ। अथास्य उत्तानमञ्जलिमधस्ताद्योक्तस्य निधायात्मनश्च सव्यम्पूर्णपात्रन्निनयन् वाचयेन्माहम्प्रजाम्परासिचं या नः सयावरीः स्थ न। समुद्रेवो निनयानि स्वं पाथोऽपाथेति" भगवदाश्वलायनश्रौतसूत्रयोः "समुद्रं व इत्यभिमन्त्रये"ति शाङ्खायनश्रौतसूत्रस्य च साक्षादेव श्रुतिवाक्यानुपूर्व्वीकाणामध्वरस्वरूपनिरूपकाणामप्यध्वरानुष्ठानफलभूतैहिकसमृद्धिविशेषस्य समुद्रोपलक्षितद्वीपान्तरीणमहार्हवस्तुजातसमवाप्तिलक्षणस्यावेदकतया स्थितत्वादुक्तयानगमनयोर्वैदिकत्ववैधत्वयोर्वज्रलेपायमानतया यथा व्याख्यातमहाजनाचारनान्तरीयकतया च कथं तन्निह्नवैकयोजकानामपुरुषार्थिनामुज्जृम्भन्तामुन्मादप्रवादाः कस्य हेतोरैहिकसुखातिशयसाधनमपाकुर्वन्तां निन्दन्तो वा किमपूर्वं फलमुपभुञ्जन्तामिति चेन्मैवम् । सूत्राणामभिप्रायस्यान्यविषयविषयत्वात्तदनुप्रश्नानां सर्वथैवानाश्रयत्वाच्च—तथाहि "समुद्रं वः प्रहिणो-

मीति । सर्वाणि च सोमलिप्तान्यवभृथे प्रविध्यति ऋजीषस्य स्रुचं पूरयित्वाप्सूपे मारयति । समुद्रे ते हृदयमप्स्वन्तरिति । प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्यथालिङ्गं व्युत्सिच्य । समुद्रं वः प्राहिणोमि स्वां योनिमपि गच्छत । अच्छिद्रः प्रजया भूयासं मापरासेचिमत्पय इत्यन्तर्वेदिशेषं निनीय यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीमधि मुखमङ्ग्धि सरस्वति । या सरस्वती वै शम्बल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे"इति भगवदापस्तम्बश्रौतसूत्रैरुद्धृतश्रुत्यवयवानां विनियोगपृथक्त्वनिर्धारणया यथालिङ्गं व्युत्सिच्य तत्तन्मन्त्रप्रकाशितायां दिशि तेन तेन मन्त्रेणोर्ध्वमपां सेचनपुरस्सरं "समुद्रम्वः प्रहिणोमी"ति मन्त्रेणान्तर्वेदिशेषं पयो निनयेदित्येषोऽर्थः प्रस्तूयते। सोमलिप्तानामर्थानामवभृथे प्रक्षेपणमापद्यते ऋजीषपूर्णायाः प्रचरण्या अप्सु निमज्जनीयता चावगम्यते । इहहि समुद्रशब्दः समुद्रगुणोपलक्षितान्तर्वेदिवेदिकाया एवाभिधाता नतु साक्षाज्जलधिमभिधत्ते तन्नयनस्य यज्ञक्रियायामकिञ्चित्करत्वादप्रस्तुततया तद्व्याख्यानव्यापारस्य निग्रहस्थानकुक्षिनिक्षिप्तत्वाच्च "समुद्रं वः प्रहिणोमी"त्यारभ्य "यूयम्पात स्वस्तिभिः सदा न इत्यन्तर्वेदिशेषान्निनीये"त्याद्यन्तं तदीयमेव सूत्रान्तरमिममर्थमतितरान्द्रढयति । अन्यच्च "गुदकाण्डमेकादशधा तिर्यक् छित्वा सम्भिन्दन्नपर्यावर्त्तयन्ननूयाजानां वषट्कृतेवषट्कृत एकैकं गुदकाण्डम्प्रतिप्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रम्"इति सूत्रम्पुनर्यथोक्तामेव वेदिकां स्वावयवसमुद्रशब्दनिगम्यमानां लक्षणावृत्त्या विषयीकरोति । "तत्रैवोदपात्रं निनयेयुः समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छतारिष्टास्तन्वो भूयाः स्म मापरासेचिनो धन"मिति भगवद्द्राह्यायनद्राह्यायणयोः कल्पसूत्रमपि सवनत्रयबर्हिष्पवमा-

नकरणाधीनप्रयोगनिर्वाहकं सत्तस्मिन्नेव चात्वाले उदपात्रं निनयेयुः। यत्तदुदपात्रमुपात्ते कर्मण्यङ्गभूतं तदेव चात्वाले समुद्रं वः प्रहिणोमीत्येतदादिना यजुषा निनयेयुरुद्गातार इत्यर्थकमर्थान्तरानवकाशं सदन्तर्वेदिवेदिकामेवोपस्थापयति एतदेवाभिप्रेत्य "समुद्र इति ब्रह्मणस्सदनम्" इति तयोरेवर्ष्योः कल्पसूत्रमुक्तार्थसम्पादकमुपरितनम्प्रवर्त्तते तत्रैव तिष्ठन्तस्सन्तः समुद्र इत्यनेन यजुषा ब्रह्मणः सदनमुपतिष्ठेरन्निति तदर्थः। तथाच नोदधिवाची समुद्रशब्दोऽत्रेत्यवधेयम्। "आपस्थ युष्माभिरित्यनेन मन्त्रेण प्रतिगृह्णाति नियन्नभिप्रयते समुद्रं व" इति पारस्करगृह्यसूत्रमपि सागरपरताम्प्रत्याचष्टे समुद्रशब्दस्य प्रतिगृहीतमर्धं शिरसाभिवन्द्यं निनयन् भूमौ प्रवाहयन्नभिमन्त्रयते समुद्रं व इत्यनेन मन्त्रेणेति सूत्रार्थः "अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहये" दित्याश्वलायनगृह्यमपि नदीनौकारोहणपरमेव सन्न समुद्रयानविषयमित्यवधार्य्यताम्। तथाच समुद्रयानयवनदेशाभिगमनयोः स्वरूपासतोर्न यथोक्तदिग्विजयव्याजेनात्रात्मलाभस्सम्भवत्युदासीनजनानामुपन्यस्ताध्वरविजयमहारम्भसम्बन्धेभ्यो निरधिकाराणामिति स्थितम्।

परेतु अशोकचन्द्रगुप्तादिप्रमुखवेलायामलेग्जाण्डरादिग्रेट्शेल्यूकस्पुरोगमा यवनमहाराजास्ततोऽर्वाचीना बाबरादयः शकाश्च नानानामानो भारतवर्षजिगीषावशंवदाः पादचारैः पावयाम्बभूवुरार्यभूमिमार्यविद्याविचारान्दूषयाम्बभूवुः परां सम्पदमपहरन्नुदचारयन्निजाचारान्निजावासांश्च-सर्वत्र प्रजाश्चार्यवर्षीयास्तैराविलीकृतस्वक्रियासामान्याः न काश्चिदासां स्वस्वरूपपरिनिष्ठा यथापूर्वं वैदिकी लौकिकी वा क्रिया नवा तत्र समाश्वासः प्राग्वत् नापि धर्म्मिष्ठाऽधर्म्मिष्ठा वा ज्ञायन्ते निजभावैः-नहि यवनहूणादिसञ्चारावासवर्ज्यं जनपदपुरतीर्थक्षेत्रादिकिञ्चिदसङ्कीर्णार्यमर्यादमवशि-

ष्यते नहि तेषां वेषभाषाविचाराचारसङ्कलनादृते निस्संकलन-स्वीयवेषाद्युन्नीताः कश्चिदाधीयन्ते गृहमेधिनः नहि निजदेशा-धीशाः शासनशैलीमनुपालयमानाः पूर्वेषां लक्ष्यन्ते नवा शक्नुयु-रनुपालयितुम्परवशाः-मतान्यनेकानि-पन्थानो भूयांसस्तदधीशा दुःशीलास्तदनुवर्त्तिनो दुर्वृत्तास्तद्वादा दुर्वादास्तद्बोधो दुर्बोधः-ए-वमाद्यनेकोपद्रवग्रस्तस्यार्यवर्षस्यानार्यवर्षत्वव्यवहारयोग्यत्वे कोन्वत्र यथोपन्यस्तार्य्यावर्त्तब्राह्मणत्वाद्याग्रहग्रहग्राहिचेतःप्रसादः कोऽनु-वा फलपाको वर्णितान्तरायव्यूहविध्वंसनपटीयानिति सङ्गिरन्ते। अत्राभिधीयते-चन्द्रगुप्तादिवेलासमायातानामलेग्जाण्डरप्रमुखाना-मन्येषाञ्चान्यकालिकयवननराधिपानामुपावृत्तगुणाधानसम्बन्ध-स्य जयक्रियामहोत्साहसंस्कारोपोद्बलितस्य संस्कारान्तरनिरूढ-सामग्र्याश्च प्रयोजकतायां तदासादनैकचिन्तावतारस्य तन्त्रताऽव-गम्यते बलाबलपरामर्शवशादेव क्रियाऽवश्यम्भाविताभावितयोर-र्थिजनसार्थसम्पादनीयत्वस्य सूपपादतरत्वात्। यद्यप्यैच्छन्नेव ते तेषामागमनावरोधिप्रयत्नविशेषमागमने वा स्वक्रियाव्याघातौपयि-कविचारमेतमास्थितवन्तोऽभूवन्नेव भूरिशः पराभावयाम्बभूवुश्च तान्निरर्गलम्। शश्वत्सामग्रीवैकल्यवशेन प्रतिहन्यमानाः परेषाञ्च तस्यास्साकल्ययोगात्क्रमेण साम्राज्यसम्पत्तिं हि सम्भवन्तीं व-न्ध्यामनोरथप्रायाभिर्विचारणाभिरन्यथयितुं कथङ्कारम्पारयेरन्-एवञ्चार्यजनगुणक्रियावैकल्यमेवार्यभूमिकापावित्र्यन्यूनतापादकं तत्प्रयोज्यः परेषां प्रकर्षश्च। सहि यावन्निजोदयमनुदयिनामाचा-रादीननुत्तमानप्यधरीकुर्यात् निजानेव निरवद्यतया प्रसारयेत्। परमत्र तदनुकरणं कुर्वाणेष्वेवोदितापत्तिरुज्जृम्भते नतु कारयमा-णेषु कारयमाणा हि दुरुद्धरावेशवशादनिष्टतमेषु नियोजयेयुः प-रमत्र जानन्तोऽप्युत्पतन्तो विनश्येयुरेव। स्वस्वरूपस्मृतिशून्यानां किंकिं नापतेदापद्रूपम्-कायिकीर्वाचिकीर्मानसिकीश्च क्रियाः काः

का न जह्युरनवस्थितचित्ताः-काः कावा नोपादद्युरपरेषां खलु ताः कान्काँश्च सङ्कल्पाननन्यसाधारणानुद्भावयेयुः किमङ्ग पुनः पुरतीर्थादीनां देशाधीशानाङ्गृहमेधिनां मतवादिनाञ्च प्रमादगोचराविचारणा-सर्वस्यास्य दुर्दैववशंवदस्य विभेदनाय भेदकदैवान्तरप्रादुर्भवनमेव साधकतमं सदभियुक्तप्रशास्तिमनुकूलयद्भिर्निरूढप्रज्ञावद्भि"रुद्योगस्साहसन्धैर्यम्बुद्धिः शक्तिः पराक्रमः। षडेते यत्र तिष्ठन्ति तत्र देवोऽपि शङ्कते १ न साहसमनारुह्य नरो भद्राणि पश्यति। ऐकमत्योद्भवा शक्तिः सर्वसम्पद्विवर्धिनी। धर्मादर्थश्च कामश्च धर्माद्भोगास्सुखानि च। धर्म्मो लोके विपन्नञ्च त्रायते महतो भयात्। आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः। पुण्यञ्च मत्प्रियत्वञ्च लभ्यते ब्रह्मचर्य्यये"त्यादि स्मृतीनामर्थानुष्ठानसम्पत्सम्पन्नैरार्य्यद्वीपस्यानवधिकातिशयराज्यसत्ता धर्मसत्तयोस्संरक्षिभिर्भवितव्यमार्य्यमहाकुलप्रसूतैरेव यदा कदाचित्। ननु तूर्णीं विलापालापप्रणालीसमालम्बिविकृतवार्त्ताकैर्धर्म्माध्वदत्ततिलाञ्जलिभिरापातव्यापारादिप्रक्रियादत्तावधानैर्ब्रह्मक्षत्रादिनामधारिभिः कथञ्चिदित्यवधेयम्।

अन्ये तु धर्मविप्लवविवक्षया द्वीपान्तरपर्यटनादिचेन्निषिध्यते प्रस्थितवन्तश्चेद्बहिष्क्रियन्ते तर्ह्यार्यप्रजैव पर्यायेणोच्छिन्द्यात्। द्वीपान्तरमननुभवन्तोऽप्यनाचारबहुला भूयांसो न बहिष्क्रियन्ते१ यवनहूणाद्यनवच्छिन्नसम्पर्किणो न दूरीक्रियन्ते३ रङ्गोनमोरिषसजाञ्जबारादिपुटभेदनेष्वार्यवर्षबहिर्भूतेष्वसकृद्व्रजन्तोऽपि नाऽऽक्षिप्यन्ते ४ आमिषाशिन औत्तरीयाः ५ चर्मवारिभक्षाः पाश्चात्त्याः ६ मत्स्याहारिणः प्राच्याः ७ मातुलदुहितृपरिणयप्रचारा दक्षिणात्याः नते सुतरामविप्रतिपन्नदुरितवन्तोऽपि ज्ञातिबहिष्कृता यदाकदावा कुण्डा गोलकाश्च प्रतीतचराः दुष्परिग्रहोपजीविनो न परिह्रियन्ते १० मृषावादिनो न विधूयन्ते ११ प्रच्छन्नपाप्मानो न प-

रित्यज्यन्ते १२ प्रकटपापा न प्रधर्ष्यन्ते १३ नाटकाद्युपजीविनो न तिरस्क्रियन्ते १४ अङ्गवङ्गकलिङ्गसिन्ध्वादिप्रवासिनो न जातु जातिबाह्या अनुभूयन्ते १५ नहि गुर्वादिद्रोहिणो निगृह्यन्ते १६ एवं यथोक्तदुर्वृत्तव्रातपरिदूषितात्मनां गुरुभूतबहिष्कारयोग्यताकत्वमुपेक्ष्य दोषे लघुनि जलधियानद्वीपान्तरप्रयाणलक्षणे प्रसक्तानामुदाराशयचन्द्रमसाङ्किमित्येष कलङ्कराहुर्मूर्धनीति मन्यन्ते। अत्राचक्ष्महे प्रजागतार्यताऽसाधारणधर्म्मोच्छेदो न मनागनुमोद्यते। नापि तद्विभवप्रभावहेतुभूतसाधनानुष्ठानव्यापारो वा कथमप्याक्षिप्यते अपि त्वनवधिकातिशयार्यमर्यादा महिमानुपालनपूर्वकमेव विभवप्रभावयोरधिगम्यतामभिदध्महे। नचैकतरनिष्ठैव फलपर्यवसाना-विभक्तप्रवृत्तेः परिनिष्ठाऽप्रतिष्ठापकताया आनुभविकत्वादिति वाच्यम्। उभयोरप्यविशिष्टयोग्यताकत्वेन तुल्ययैव गत्या रिरक्षयिषितत्वाद्व्याकीर्णाभिरपि प्रवृत्तिभिरर्जनीयतरार्थोपस्थापनौपयिकाग्रहातिशयस्याभ्यर्हिततरत्वाच्च-बलाबलविमर्शे वातयोर्धर्मानुपालनसत्त्वैव सर्वशः शिवङ्करी। नच वाच्यं विभवादिभिर्विपक्षिगणप्रकर्षे भवेदेव तैरभिभूयमाना धर्म्मस्थितिरन्तर्धिमनुभवन्ती निराश्रया स्वीयव्यावहारिकयोग्यतादौर्बल्यवशादिति-धर्मानुष्ठानमहिम्नैव समस्तापत्तिदूरीभवनस्य परस्सहस्रोदाहरणैर्निर्णीतचरत्वाद्विधानविषयत्वाच्च। नहि तावता तन्न्यूनतायास्सहनीयत्वमनुमोदेमहि अपितु तत्सत्तामनुपमृद्यैतन्न्यूनतापनोदनमभिवाञ्छामहे। द्वीपान्तरजिगमिषवः साम्प्रतिकास्तु स्वीयं धर्म्ममपरामृशन्तः प्रत्युत द्विषन्तश्च परेषामाचारानुकुर्वाणाः स्वार्थपरार्थसमर्थनासमर्था आर्य्यमर्य्यादाभ्रंशकरा एवोद्वीक्ष्यन्ते-नतु स्वधर्म्मकामाः शौर्य्यधैर्याद्यङ्कुरितशोभनहृदया राजानो राजपुरुषा वा जिगमिषन्ति क्वचित्तथाविधाभिमानिनः प्रस्थितवन्तोऽप्यपरामृष्टनिजाभिनिवेशा अनर्जितोचितार्थैकदेशा एव प्रत्यावृत्ताः प्रती-

यन्ते गमनं हि तादृशानां निजपद्वीपर्य्यालोचनया परिहासायै-वावकल्पते केवलमिहापि। एवञ्च निजाविच्छिन्नप्रबन्धोच्छेदकारित्वं प्रकृत्यार्य्यप्रजोच्छेदकारिणः स्वयमेव हि ते प्रयोज्यस्वरूपहानिम्प्रति प्रयोजकयोग्यताहानस्य हेतुत्वात्। न चार्य्यवर्षे वा वसित्वा तद्भ्रंशकरत्वे तेषामर्थतः किमिति वैषम्यमिति वाच्यम् तद्विभ्रंशप्रसक्तेर्न कुत्राप्यनुज्ञातत्वादार्य्यवर्षे नन्वनल्पताऽसम्भवाच्च। पृच्छाभिरेतादृशीभिः स्वक्रियाऽनुवर्त्तिनीभिरुपलक्ष्यैव निजधर्म्मे नास्तिक्यमापाततो वा तच्छीलनप्रतीतिमास्थायोक्तनिर्बन्धविशेषस्य परिणतेः श्रेयोनिदानस्य विधीयमानत्वात्। नच वाच्यं "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"ति वचनमकूलयतां नो न निजधर्म्मसमयव्यभिचार इति। तथाविधाभिर्निवेशवतां तदभिनिवेशभङ्गभियाऽर्थाल्पतरताकूत्या च अगमनमेव वरमिति ज्ञापयितव्यत्वात्। तथाचोक्तगमनादिनिषेधकप्रमाणप्रपञ्चावतारआर्य्यतापरिपालनपुरःसरमार्य्यसन्तानाविच्छिन्नप्रबन्धलक्षणमहोन्नत्यै केवलमभिप्रेयते। द्वीपान्तरगन्तार इव व्यक्तीभूतदोषसमवेतत्वे तेषामप्यबहिष्कार्य्यताऽभावसम्बन्धस्य प्रतिप्रत्ययमध्यवसीयमानत्वाद्बहिष्काराबहिष्कारयोर्दोषादोषवत्तयोरेव निमित्तत्वाच्च—यथाह "विषमा विपरीता नश्यन्ति तानाचार्य्योपदेशो दण्डश्च पालयत" इति गौतमः। नहि कश्चित्स्वच्छन्दतामर्हति मनागपि तस्याः पुरुषार्थप्रत्यनीकत्वात्। नहि पुरुषार्थादृते पुरुषः पुंस्त्वं स्वं सफलीकुर्य्यात्। आत्मनिष्ठप्रत्यासत्त्या तयोः प्रयोज्यप्रयोजकभावः। असति सङ्करीकरणाद्यापादकसम्पर्कातिशये निजमर्य्यादामनुपालयतामदूरीकरणीयत्वात्। नच तयैव विधया द्वीपान्तरे सञ्चरतान्नः किमिति सङ्कहानुग्राहिशङ्कापरम्परेत्याशङ्कनीयम्। उच्छास्त्रप्रवृत्तीनामार्य्यवर्षबहिर्वसतेर्य्यथोपन्यस्तसङ्करीकरणाद्यनापत्तिप्रत्याशाया असम्भवे तन्निरूपितवैधर्म्यस्यैव दुष्परिहरत्वात् ३ र-

७

ङ्गूनादिनगरीर्व्रजन्तः प्रायशो दास्यमाचरन्तो भृतकभेदभिन्नाश्च जघन्यजातीया एव-परिगणितवर्णवर्त्तीचेत्तद्धर्म्मानुवर्त्ती तदा सोपि तदापत्तिमर्हत्येव यथायोगम् । परमत्र ब्रह्मदेशसिंहलद्वीपयोरार्य्यवर्षम्प्रत्युपार्य्यवर्षभावम्भजमानयोः पुरा किल चातुर्वर्ण्यसम्बद्धतयोपनिबद्धयोस्ततो वैधर्म्यमनुभावनीयम् ४ आमिषाशनाद्यसाधारणदोषलक्षणानामपीतरयावद्धर्म्मानुष्ठानसन्निविष्टानां शिष्टविशिष्टानां प्रचारस्यास्य मूलं किंचिदास्थितवतो "देशधर्म्मजातिधर्म्मकुलधर्मांश्चाम्नायैरविरुद्धाः प्रमाणम् । जातिजानपदान् धर्मान् श्रेणीधर्म्मांश्च धर्म्मवित् । समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मम्प्रतिपादये" दिति गौतममन्वोः शासनोपजीव्यस्य भूयः प्रमाणविप्रतिषिद्धस्यापि प्रमितिविषयतावच्छेदकावच्छिन्नतामाक्रान्तवन्तः स्निग्धस्य स्नेहनवद्विचारणायामनाक्षेपविषयत्वात् । तेपि वा प्रचाराश्चतुर्णामप्यवच्छेदकावच्छेदेन न सम्भवन्ति । अपि तु सामानाधिकरण्येनैव । तत्रापि मूलीभूतप्रमाणचिन्तायां प्रथमतृतीययोः श्येनाधिकरणन्यायस्य क्रोधाक्रान्तस्वान्तम्प्रत्यभ्युपायमात्रप्रदर्शनपरता । यो हि प्रत्यर्थिपराभूतिमन्विच्छेत् तस्यायमभ्युपायः "श्येनेनाभिचरन् यजेते"ति । नतु श्येनेनाभिचरितव्यमिति गम्यते विधानङ्किञ्चिद्वा । प्रकृतेपि तन्न्यायमाश्रित्यैव "प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति" स्वाभाविकप्रवृत्तिविमुखीकरणविवक्षयाऽदृष्टार्थप्रत्यायनमेवाभ्यर्हिततरमापद्यते चर्म्मोदकपानप्रचारस्य कयाचिन्न्यपेक्षया मरुभूमिकादुर्न्निमित्तप्रसङ्गैकसंजातस्यादौ किल जघन्यजातीयमानवालम्बनविषयस्य "गतानुगतिको लोको न लोकः पारमार्थिक" इत्याभाणकैकप्रमाणकस्यानुदाहरणप्रायत्वात् । नहि तदादिमण्डलेष्वध्ययनादिगुणमण्डितास्तमेतं न्याय्यम्मन्यन्ते सम्भावितानां गेहेष्वधुनापि प्रचारस्यास्यादृष्टचरत्वात् । यद्यपि "गृहस्थः सदृशीम्भार्य्यां विन्देतानन्यपूर्वां यवीयसीं असमानप्रवरैर्विवाह-

ऊर्द्धं सप्तमातिपतृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमा"दिति गौतमवचनान्मातुलसुतापाणिग्रहणकर्म्मणो गम्यते निषेधः अन्या अपि मन्वादिस्मृतयो नानुमन्यन्त एव तत् तथापि"मातुलस्येव योषे"त्यादिश्रुतिमूलकतया तदाचारस्य दाक्षिणात्येषूपलम्भात् । नच तच्छ्रुत्यर्थस्य मन्वादिभिरस्मृतत्वात्सांशयिकतैवेति युक्तं वक्तुम् श्रुतेरपुरुषशेमुषीमालिन्यतन्त्रायाः सिद्धत्वे मन्वाद्यस्मृतत्वन्यूनतोद्भावनमप्रामाण्यलक्षणमुपपद्यते तैरस्मृतार्थानामनेकेषां नानाप्रकरणेषु मन्त्रार्थवादादिभ्योऽवगमात् । तस्याऽपि वा प्रचारस्य तेष्वव्यापितयाऽनुभूयमानत्वाच्च—तथाच यथोपन्यस्तचतुर्विधाचाराणामन्यविधतया विधान्तरमापाद्यापि न साहसमात्रेण प्रकृतावगम्येऽर्थे प्रमाणसामान्यहीने तदादीनां ज्ञातिबहिष्करणादिसाम्यमाकलनीयम् । कुण्डगोलका हि व्यक्तीभूतनिजभावाः सन्तः परम्परयैव बहिष्कृततरा बहिष्क्रियन्ते करिष्यन्ते च दोषाविर्भावं विमृशद्भिर्ज्ञातिपरिषद्वरैरित्यवगन्तव्या तद्गतिः दुष्परिग्रहलक्षणदुराचारवन्तः श्रोत्रियसम्भावितसामन्तैः प्रत्यर्थमुपेक्ष्यन्त एवेति किमितस्तेषां शिष्टकोटिबहिष्करणलक्षणादनुपादेयसाङ्गत्यादन्यच्छासनमुत्कृष्यते १० अनृतं वदतां वाचः प्रतिष्ठामप्रतियन्तो व्यवहारिणस्तेष्वत्यर्थमविश्वस्युरिति किं ततस्तेषाम्परो दण्डः क्लेशावहः ११ प्रच्छन्नपाप्मनां दिव्यादिप्रमाणैरप्यप्रतीततया न तेषां दोषित्वापादकसामग्रीमृते तदापत्तेर्य्योग्यताऽवकल्पनम् । अपितु "गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनां । इह प्रच्छन्नपापानां शास्ता वैवस्वतो यम"इति वसिष्ठस्मरणादपरावे सविकृते तद्विषयानियमे यमगामिशास्तृता सुव्यक्ता न विहन्यते । वस्तुतस्तु "कृत्वा पापं न गूहेत गुह्यमानं हि वर्द्धते । कृत्वा पापम्बुधः कुर्य्यात्पर्षदानुमतं व्रत"मिति शङ्खस्मरणादुपेक्षालक्षणापराधाधिक्यानिष्पत्तये प्रायश्चीत्तीयतावगमात्तदाचरणमपि तत्रतत्र गम्यत एव १२

सति हि प्रतीतियोग्यताकत्वे प्रकटपापानां यथोचितदमनीयत्वं प्रतीतचरमस्ति नेति सञ्चिन्त्यताम् १३ श्रोत्रियसम्भावितादिभिरसंसृज्यमानव्यवहारवत्तया नाटकिनां किमितो नाटकमहाहाटकप्रकटाट्टहासः परीक्षकपरिदृष्ट्या १४ सति च सिन्ध्वादिदेशप्रवासनिमित्तप्रायश्चित्तप्रतिपादकयथोक्तवचने तदकरणलक्षणप्रत्यवायविशेषस्यानिष्टविशेषात्मकस्य प्रतिपत्तव्यतयाऽन्यथानुवर्त्तनस्यैच्छिकत्वेनाप्रमाणकत्वात्-सम्प्रति चातुर्वर्ण्यव्यवस्थानस्य तत्र सुव्यक्ततया यथोपन्यस्तदिशागमनावासयोरविगीततरत्वान्न जातिबाह्यादिप्रसक्तिरद्यतनी यथाश्रुतगुरुत्वादिसम्पत्तिसम्वलितत्वे तद्गोचरप्रतिपत्तिवैमुख्यस्यापि कलङ्कास्थानत्वेऽत्यन्ताविवेकिविषयद्रोहादिप्राप्तौ च तद्विषयलोकापवादलक्षणस्यैव "लोकापवादाद्भय" मिति । वचनोपजीव्यनिग्रहस्य प्रायश्चित्ततरस्थानीयत्वात् १६ तथाच व्याख्यातशङ्कावयवनिर्गलितार्थपर्य्यालोचनयाऽऽक्षेपविषयबहिष्करणादेस्तेषामविषयत्वमभिप्रेत्य वैधर्म्म्यस्योपपत्तौ समानविषयतानिमित्तकगुरुलघुदोषावतारप्रसक्तेरप्रस्तुततया ततः पार्थक्येनोपपन्नवरुणालयविहारहूणयवनादिद्वीपपर्य्यटनयोः प्रमाणसामान्यनिगृहीतयोर्न्निरूपितानन्तदोषमञ्जूषयोरार्य्यसन्तानानुपादेयत्वमत्युत्कटम्प्रतीयत इति तदाचरणप्रयुक्तकलङ्काऽतिशयान्वयान्मोमुच्यन्तामार्य्यसत्तमाः ।

इतरे तु समुद्रो हि सर्वेश्वरमहामहिमानुमानभूमिः १-कुलाचलाश्चानेके निमज्योन्मज्य वर्त्तमानास्तत्र वर्ण्यन्ते २-दानवाश्चोषुः ३ अवात्सु रक्षांसि ४ तिमितिमिङ्गिलादयो महाकाया महीयन्ते ५ जाह्नवीयमुनामुखा महानद्यो विराजन्ते ६ महार्हरत्नवीथयः प्रदीव्यन्ते ७ इक्षुलवणादिनानानामकव्यक्तिगामिनस्समुल्लसन्ति षडूसाः ८ सुरासुरास्ससम्भ्रमं ममन्थुः ९ ततस्तत्र महाऽमृतमजायत १० महालक्ष्मीश्चाजनिष्ट ११ परिशिष्टान्यष्टौ रत्नान्यजनि-

षन्त कौस्तुभादीनीति १२ पयःपारावारं ह्यध्यास्ते नागारिवाहनो नारायणः सगरनन्दनैरुत्पादितश्चेत्येवमादिविविधोदाहरणोपलक्षितनिजसत्ताविशेषस्य "समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति ह्यसिसरसामस्मि सागर" इत्यादिवचनाभिप्रायोद्दीपितस्य स्थलभागतो बृहत्तरस्य च समुद्रस्य परपवित्रतया पराभीष्टप्रदायितया च सर्वैरव्याहततत्प्रयाणवाञ्छावद्भिर्भवितव्यमिति निगदन्ति तदेतदसङ्गतं उदाहृताशेषगुणवत्तायाः समुद्रनिष्ठायास्तदधिष्ठितनौकाविहारप्रामाण्यसमर्थनासमर्थत्वात् प्रत्युत गुणगणमहिमभिर्विहारविरहिताया एव गम्यमानत्वाच्च। यद्युपदर्शितनिदर्शनैर्व्यावहारिकार्थवत्तामभिमन्येत स्वांस्वां तर्हि प्रत्यर्पिततरक्रियास्वेव फलबाहुल्यादाशिषाम्बाहुल्यनिबन्धनायाः प्रवृत्तेर्युक्ततया सुरासुरादिवद्रत्नाकरमथनाद्यमानुषफलपरम्पराधूर्वहमत्यासन्नङ्क्षिमित्यद्य नाभिप्रेयते महामतिभिः येन ह्येभीरत्नान्येव रत्नाकराल्लप्स्यमानैः परिमुक्तदारिद्र्याऽधिक्यैर्निःसीमसम्पत्सम्पन्नैरप्रत्यूहम्भूयेत। नहि कश्चिदवष्टम्भान् विन्दमानेष्वासन्नसदाशीभिरुपेत उपेयते। दृष्टनष्टस्वरूपप्रायानेव कामयते न वासंदेग्धि तत्फलविशेषविधासु न ह्यनल्पबलवीर्य्यवदुदाहरणान्यत्यल्पबलवीर्य्याणाम्प्रयोजनसाधनायालम् न ह्यकुण्ठकण्ठीरवशौर्य्यधैर्यादिकथाः कथकेन केनचित् कयाचिद्व्यपेक्षया शृगालसङ्घायोपदिश्येरन् उपदेक्ष्यमाणा वा क्रिया कृतेऽवकल्पेरन् यतस्ते वादास्तेष्वेवालम्भावम्भजन्ताम्-प्रवचनवशान्नु नानुकारिणोऽमी वस्त्वंशलवस्य वा। अतोदाहरणोल्लिखनजन्माश्रमो वा मा भवतु। आपत्तिश्चार्थानुवर्त्तननिबन्धना आपादयितुन्न त्वनर्थायापार्थाय वा गङ्गादीनां सङ्गमनेन पावित्र्यमनुगमय्यापि विहरणम्महार्णवे किमात्मकम्। किंस्विदपूर्वनिबन्धनम् विष्णवादेस्तत्र वसति व्याख्यानानि निर्ब्रूयुः कतमास्मिन्कर्मणि किन्ते व्यापकप्रज्ञाकाः समुद्रादुत व्याप्यप्रज्ञाकाः-अपप्रज्ञा-

स्ततो हि रुङ्गिरूपणार्हाः-किन्नस्युर्विप्रकृष्टतरास्तदाचारेभ्यः मनुष्यादीनाममृतायमाणमप्याज्यं मक्षिकाणां किल विषायते । नहि समुद्राम्भसो बिन्दुमबहुं वा प्राश्नीयुः सोल्लासमर्वाचीनाः स्मर्य्यते ननु महर्षिणा घटयोनिना चुलिकितो गिलितश्च क्षणादेव महाजलधिः-पाकशासनिना महाशूरेण शरव्यया सम्बद्धः प्लवङ्गमैर्हनुमदादिभिर्म्महीधरैर्न्निबद्ध इति च । त इमे अर्वागदृशामचिन्तनीयनिरूपणा इति परं विप्रकर्षः रजनीचरसामन्ता अपि तत्सीमामनुभावयमाना एवाभूवन् । दैत्यमहाराजा अपि तेभ्यः प्रकृष्टकर्म्मण्यसंवर्णिताः प्रतिसमुत्थानम् । समुद्रोत्थानि हि मथनमहोद्यमरूपितानि रत्नानि दिव्येव चञ्चूर्य्यन्ते निजतेजोमरीचिभिः किमुत भगवन्तो नारायणादयः क्षीरार्णवमहाभवनाः-साहचर्य्यमाचरन्तीमिन्दिरामपि दारान् प्रकृत्य किंत्वेनसम्प्रति निदर्शनप्रयासमभ्युपेयात् । नच निःशेषद्वीपसंव्यापितस्वीयजयस्तम्भाः सार्वभौमाः समुद्रयानसाधनैकयातायातप्रयत्ना ह्युत्तरोत्तरप्रजाः प्रतिपन्थानमवगाहयमानाश्चास्मदाद्या इति वाच्यम् । विजयमहोत्साहमहाद्वारसमरसमारम्भसम्पन्नानामनुदाहरणीयतरत्वात् । नच वाच्यं वयं वा सम्प्रत्यसमर्थाः समयान्तरे तथाविधा भूयास्मेति बालबला अप्यबालबलायानुगृह्णामहा इति । तथाविधप्रकृष्टतमप्रतापवत्तामृते प्रस्थानाभ्यर्थनाऽनुज्ञानयोरप्रवर्त्तयितव्यत्वात् प्रवर्त्तयितव्या वा अकार्य्यकारित्वादनर्थापादकत्वादिति युक्तियुक्तमनुचिन्तनीयत्वाच्च । नचोपायच्छेदन उपेयावाप्तिरुपपद्येत साधनानुष्ठानतन्त्रा हि साध्यसंसिद्धिरिति हि व्यवहारविदोपि मन्यन्त इति चोदितव्यम् तस्यास्तथात्वेऽपि साध्यनियतपूर्ववर्त्तिनीनां नाम साधनसामग्रीणां स्वस्थावस्थायामेवार्य्यमर्य्यादाऽबाधमधिगन्तव्यत्वात् द्वीपान्तरादेव तस्या अप्यवाप्तिप्रत्याशाया बहुतरान्तरायान्तरिताया निजधर्म्मान्तर्द्धानाय सहभाविताया अप्रयोजकतरत्वात् । नहि स्व-

धर्म्मगुप्तिपूर्वमेव ततः कलाप्रावीण्यमुदिताभ्युदयनिदानमुपपद्यता-
मित्यवकल्पते विधर्म्मभूमेः सधर्म्मभूमित्वाभावस्यानुभविकत्वात्।
नहि राजसत्तानामकारुणिकी स्वंस्वंनिबन्धावयवैर्धर्म्मं रक्षिष्यत्ये-
वेति सम्भवति विषयस्यास्य विचारसहत्वात्। तथाहि सिद्धौ तस्यां
कारुणिक्यामेव प्रभुतायां हूणधर्म्माभ्युच्चयौपयिकत्रिकरणोद्योग-
प्रयासभूयिष्ठायां वर्णाश्रमधर्म्मपारम्परीपरिरक्षणानुकूलसाहायक-
तटस्थभूतायामाङ्ग्लानां किल वेषभाषामभ्यसन्तस्तेषु परं कृतमै-
त्रीकाः प्रथमं तावन्निजमर्य्यादाविप्रतिपन्नास्तदाचारप्रचारसामा-
न्यहीनाः स्वेभ्यः परं ह्युदासन्ते। वितन्वते च वादातिवादान्।
न जानते च निरूढस्वस्त्ययनं क्वचिदपि विचारणाभूमौ "येनास्य
पितरो याता येन याताः पितामहाः। गच्छन्ते नैव मार्गेण नरिष्य-
ति कदाचने"त्यादिसर्वज्ञानमन्वादिवक्तृकाणां वाक्यानामभिप्राय-
मपरामृशन्तः सर्वत्र नास्तिक्यमुपयन्तो ह्यपयन्तश्चास्तिक्यं सन्तः
साम्प्रतमेवंविधोच्छृङ्खलप्रवर्त्तनावतां व्राताः समुज्जृम्भन्ते। त एव
समुद्रयानद्वीपान्तराभिगमनयोः पर्य्यनुयुञ्जन्ते । ननु निबद्धम-
र्य्यादासम्भृतात्मानो लौकिकालौकिकभूतिकामाः पूर्वापरविचार-
णाविहितमतिप्रकाशाः ब्रह्मक्षत्रादिसामन्तसम्भावितनरनिकराः
कदाचित् यैर्भरतवर्षमहाभिधानमार्षधर्म्मनिरतिशयमहिमा च मा-
त्रयाऽप्यनुपाल्येते। व्यावहारिकफलाभिसन्धिमत्तायाः स्वनिष्ठ-
नानायोग्यताऽतिशयवशात्ततो भूयस्त्वेऽपि प्रधानधर्म्मप्रस्थानाव-
श्यंभाविप्रक्षयसमीक्षया तैस्तयोरसम्मततरत्वात् तस्या एव वीक्षा-
या निराबाधत्वाच्च। नच तेषां विचारानभिज्ञताधर्म्मजडताभ्यामे-
वाप्रवृत्तिस्तत्र लोकभिया वेति साम्प्रतम् "आत्मार्थम्भोजनं यस्य
सुखार्थं यस्य मैथुनं। वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवित"
मिति भगवत्कृष्णद्वैपायनस्मरणाद्धर्म्मानुष्ठानार्थत्वादर्थकामयोर्द्ध-
र्म्मस्य हिताभ्यामप्ययये अर्थकामावर्थयमानस्यामेधसो दुर्म्मेधसश्च

श्रीरनर्थायैव । नहि वरविघाताय कन्यामुद्वाहयन्ति । द्रव्यञ्च धर्म्मानुष्ठानाय । धर्म्मश्चोपात्तदुरितापनुत्तये ततो ज्ञानोदयः । यथाच स्मृतिः "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्म्मणः । यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनी"ति । एवञ्च चोदकानामेवाविचारशीलताधर्म्मनिष्ठुरतोन्मार्गगामिता चेति कृतम्प्रज्ञया तेषाम् । तथाच-सन्ध्यादिनित्यक्रियाणां श्राद्धादिनैमित्तिकानां समस्तेतरसदाचाराणां च रत्नाकरयानद्वीपान्तराभिगमनसाक्षान्निबन्धनस्तिलाञ्जलिर्निर्विशङ्क आपतति । ततः पातित्यम् "अहरहः सन्ध्यामुपासीते"ति श्रुतिः । "नानुतिष्ठति यः पूर्वामुपास्ते नच पश्चिमाम् । स शूद्रेण समो लोके सर्वकर्म्मविगर्हितः । क्रियाहीनश्च मूर्खश्च सर्वधर्म्मविवर्जितः । निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते" इत्याहतुरत्रिपाराशर्य्यौ । "आचारः परमो धर्म्मः सर्वेषामिति निश्चयः । हीनाचारपरीतात्मा प्रेत्य चेह विनश्यति । आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गा अखिलाः सपक्षाः । काम्प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः । दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेवच । आचारात्फलते धर्म्म आचारात्फलते धनम् । आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् । अथाचारान्प्रवक्ष्याम्याचाराल्लभते धर्म्ममाचारादेव धनमाचारादेव सुखमाचारादेव मोक्षमाप्नुयात् । विद्याविनाशे पुनरभ्युपैति ज्ञातिप्रणाशे त्विह सर्व्वनाशः । कुलापदेशेन हयोपि पूज्य" इत्यप्याहतुर्वसिष्ठगौतमौ । इत्थञ्च यथोक्तपातित्यापादकारम्भरंहसामुत्प्रेक्षागोचरास्तर्कास्तज्जातीयक्रियास्वेव मानं नातज्जातीयास्वैकान्तिकासु एतेन सागरयानहूणादिविषयपर्य्यटनयोः परार्थभूतधर्म्मात्यन्तिकप्रच्यवनम्प्रति निरपवादहेतुतया न तत्र ब्राह्मणादिभिः श्रेयस्कामैः "शुभाशुभाभ्याम्मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया

शुभे पथि। पौरुषेण प्रयत्नेन लालयेच्चित्तबालक"मिति भगवत्या: श्रुत्या मातापितृसहस्रेभ्योऽप्यतिवेलं वत्सलतरायाः परोपदेशमनु-सन्दधानैः कदापि वर्त्तितव्यम्।

एके तु विंशीं त्रिंशीं चान्तरावत्सराणां वाङ्गाः किल सुरेन्द्र-नाथज्ञानेन्द्रमोहनप्रमुखाः नेपालमहाराजामात्यजङ्गबहादुरनामा चेतरे कतिचिद्दक्षिणापथालङ्कारभूतास्समुद्रवाहनेन लण्डनपुरी-म्प्रतस्थुः दीर्घकालं तत्रोषुः कीर्त्तिञ्च लेभिरे १ अधिगतकलावै-शारद्या ह्युत्तीर्णशिविल्सर्विस्पुरोगमपरीक्षणपरप्रस्थाना यवनपा-रसीका महापरिषद्युत्तमप्राड्विवाकपदभागिनो भूत्वा नूनं ते ब्रह्म-क्षत्राद्युत्तुङ्गश्रेणीः प्रशासति एधिष्यन्त एव प्रत्यब्दमनुकूलाधिका-रविन्यासविशेषैः २ तदाननैकनिरीक्षकतया प्रतिप्रत्ययमूनव्या-सङ्गसम्भारैः पराहण्यन्ते प्रबुद्धधियोऽपि तदुन्नतश्रेणीकाः ३ जा-पानजानपदाअपि यवनपारसीकादिव देवोक्तपरीक्षास्वर्जितप्रति-ष्ठाश्चरितार्थाश्चानुभूयन्ते ४ भारतवर्षीया हन्त तत्र हतभाग्या असम्भाव्यधर्म्मनिर्बन्धैः कारागारैकनिर्बद्धाः सन्तो द्वीपान्तराभि-गमनगोचरसुधावादास्सञ्जीर्यन्ते। हा वयं कदा किलास्माद्बन्ध-नान्मुच्येमहीत्यालपन्ति ५ तदेतदपलाप्यते। तथाहि नोदीरित-वाङ्गादयो द्वीपान्तरं नागमन्निति वदाम अपि त्वपरिशीलितध-र्म्मादीतिकर्त्तव्यता का अपरामृष्टव्यावहारिकसमयसंयोजनाः कौ-तुकविशेषाश्लिष्टक्लिष्टचेष्टाका एव प्रवर्त्तयाम्बभूवुस्तत्रेत्यनुजानीमहे। प्रागपि गमनादुन्मुक्तवर्णाश्रमाचारा अवर्त्तन्त एव ते। ख्रिस्तवर्त्मा-नुवर्त्तिनीभिर्विलासिनीभिः कृतसम्पर्का अप्यभूवन्नित्याकर्ण्यते हि। अयि ते सम्बभूवुर्बहिष्कृतप्रायाः। पित्रादिभिरप्यप्रवृत्तभाषणादि-प्रचाराः किमङ्ग पुनः प्रत्यागमनादुत्तरकालं गतिस्तेषाम्। एवञ्च इहामुत्र प्राप्तव्यप्रत्यनीककीर्त्तिर्वा किमात्मिका कौटुम्बिकानन्दा-प्रदायिसम्पदः किम्पदाः सन्मार्गासञ्चारिताप्रज्ञा वा कि-

म्पन्ना । "यौवनन्धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टय"मिति वाक्योदाहरणभूमिरमीहि । जङ्गबहादुरप्रभुणाऽप्यार्यवर्षप्रकृतीनामनवच्छिन्नसन्तापचयापनोदिनी का नु समुद्भाविता लौकिकी प्रक्रिया कानुवा सन्तोषपारम्परीप्रयोजिका किन्तेन कलाकौशलमभ्यात्तं तेभ्यः । कोवा तत्र निजपरराज्याभ्युदयहेतुभूतसमाधानातिशयः समर्थितः । के ह्युत्तरकालीनतद्वोपनौपयिकसंविद्विशेषाः समासादिताः । किन्तत्र पार्लेमेण्टमहासभासभास्तारकोटिकतयाऽऽत्मानमन्यं वा भरतवर्षीणमण्डलेश्वरमितरं वा मन्त्रिजनवर्गीणमुदारधियममन्दपरिष्कारहेतवे नन्वशेषार्य्यवर्षीयव्यवहारप्रस्थानानामनुमोदयितुमयाचिष्ट । अधिप्रजं भरतवर्षे विनिवेशितानन्तदुर्भरकरावलीनिर्हारमृजूकरणं वाऽयाचत । साभिप्राययाच्ञायां कुर्वद्रूपफलापत्तिः कतिपयकालमर्य्यादया वा सम्भवन्ती महतीरपि व्यथा अपह्नुयादेवाविघ्नम् । न वा वणिग्गणव्यापारप्रस्थानविनष्टि परम्परोपन्यासपूर्वकतदपवादकव्याख्यां वितेने न वा वर्णाश्रमिणामेकामपि व्यक्तिं वाऽऽद्यात्विप्रस्तमत इतीदमादिकया समयबन्धनिबन्धिन्याकारयामास कामपि व्यवस्थां तत्सभातः नाभिप्रेतमेकं वा निरूपितानामभिप्रेतं वा अभिप्रेतमपि सामग्रीवैकल्याद्वा साकल्येऽपि तस्याः सम्प्रयोगाभिमानहीनत्वाद्वोपेक्षितमित्याद्यनुसन्धीयतामनुमानविशारदैः । नह्यन्यकल्पनासमालिङ्गितपुरुषप्रयत्नसाधारण्यमतिशयितायां व्यक्तौ मन्यामहे न्याय्यम्- एवञ्च सर्वमसम्प्रातिपन्नमेव प्रतिक्षणोपारूढया तन्महत्तानुकारिकमनीयकर्म्मणः समीक्षयाऽर्कफलोपभोगप्रत्याशासङ्काशतया महतोऽपि प्रस्थानम् । किमुत यथोक्तानामनुक्तानाञ्च स्वोकगतीनाङ्गतिरिति ज्ञायतां तावत् । सिविल्सर्विस्संस्यूत्या किलार्य्यवर्षे न भवितव्यमाङ्ग्लराजधान्यां लण्डननाम्न्यामेव भवितव्यमित्याद्याग्रहप्राग्भारस्य हि निदानस्य चिन्तयितव्यत्वात् तथा

हि भरतवर्षे तत्परीक्षणानुमोदने परीक्षादातॄणां द्रागेवैधिष्यत एव सङ्ख्या द्वीपे त्विङ्ग्लण्डात्मनिधर्म्मादि प्रबलप्रतिबन्धभियातन्नगरीञ्च जिगमिषेयुः तेन चाल्पसङ्ख्याकानामेव प्रेक्षावतां पर्य्यवस्येदुपद्रवः। भारतवर्षे त्वनुज्ञायाम्प्रतिगेहन्ते अनुभूयेरन्नित्यनिष्टम् इष्टश्चैतदार्य्यवर्षीयाणामनधिकृताधिकारत्वम्। अधिकृताधिकारत्वं त्वाङ्ग्लानामेव निरवद्यतया स्वैर्न्निरणायि। निरमायि च स्वेभ्य एव प्रकृष्टपरीक्षाकिलानन्यगतिमत्ताभिप्रायपूर्वकम्। तत्र हि पारसीकादीनामप्यापाताधिकारापादनमात्रमनुमीयते दुरन्तविवादप्रत्ययधारोपशमकृते कतिपयकालावधि यावन्निजनिरवच्छिन्नप्रभुताऽनुपालनविकाराभावस्तावदेव तत्परीक्षाप्रसारतत्प्रयोज्याधिकारवितरणादिनियमश्च पालयिष्येते तत्परिषदेति। यदा हि ताभ्यां विपर्य्ययपरिणामप्रभवप्रातिकूल्यावभासस्तदा तदुत्तरक्षण एव तयोरुपसंहारः स्वायत्त एव कृत इतीङ्गितज्ञैराकलनीयम्। आर्य्यवर्षीयाश्चेत्स्वनिबन्धान् निर्बन्धाँश्चातिलङ्घ्योत्तरोत्तरमधिकाधिकसङ्ख्याका ब्राह्मणादयो नातःपरं स्वीयपरकीयसमयानुसारिणस्तर्हि तदैव ते प्रतिरुद्धा भवेयुः सङ्कोचविकासौ हि स्वाधीनौ नैवंविधान् विधातुं वशेन व्यापार्य्येत इति। एवञ्च परीक्षायास्तस्या अन्यस्याश्च तज्जातीयप्रक्रियाया गुडजिह्विकयैव प्रवृत्ततया नस्थायित्वाभ्युपगमः। वस्तुतस्तु सिविल्सर्विस्परीक्षा अन्याश्च भेषजादितत्त्वग्राहिकाः सत्यां सम्भावितानां वाणिजानाञ्च सामन्तानां सोपपत्तिकाभ्यर्थनायामाहङ्कारिक्यां न ताः परीक्षाः न सा साङ्ग्रामिकी कला न तदन्यत्परीक्षणमन्यादृशार्थयोग्यताकमिहैव भारते वर्षेऽभ्यनुज्ञायेरन्नभिप्रचारयितुमिति न मन्महे। नहि बालधिषणाविद्यार्थिनः स्वार्थभूतमपीममर्थमर्थयितुमन्ये वा किंचिदधिकधर्म्माणः पर्य्याप्ताः अपितुबालधिषणा एव यथोपन्यस्तानामथसमष्टिर्वा तेषाम्। नहि विश्वजनीनाव्यवस्था व्यक्तिरेकतमाभिर्व्यक्तिभिः कुहस्वित्कृतप्रस्थाना

सती हि व्यक्तिरेकला सती न स्वार्थनिर्वर्त्तनसमर्था । नह्येकस्तन्तुः सुदृढोऽपि समर्थो बन्धने तत्कूटं तु शक्ष्यत्येव तत्रेति व्यक्ततरम् । तदाऽप्ययुक्तियुक्तं व्यापारयेयुस्तर्हि कार्य्याक्षमम्पर्य्यवस्येत् । तस्माद्यथोक्तसामन्ताद्युन्नेष्यमाणाभ्यर्थनयैव तदादिपरीक्षाया भरतखण्ड एवानुमोदनसम्पादनगोचरया प्रामाणिकया च भवितव्यम् । तदपि चेदसिद्धप्रायं मन्येत तद्द्वीपगमनं वाऽसम्पन्नस्वार्थाभ्यर्थनानां ब्राह्मणादीनामन्याय्यं तर्ह्यापद्येत । तत्र हि क्रियाहीनमेव वाग्व्यापारं सन्तमभिभावयेयुस्तर्ह्यतिप्रसक्तिर्दुरुद्धरैव । न च नालिकार्थवादिता मुधा समाश्वस्तताऽस्मास्वस्ति पारसीकादि तदादिपरीक्षाविषयोत्फुल्लप्रवृत्तीनाम्फलिनीनामद्धोपलम्भादिति भणितव्यम् । स्वेभ्यो विधर्म्मत्वाद्व्यवहारतश्चोक्तार्थासालक्षण्याभावाच्च । न ते तेभ्योऽमृतायन्ते युष्मभ्यं वा विषायन्ते परमत्र वैषम्यापादकं त्वन्योन्यस्मिन्वैधर्म्म्यमेव दुरुद्धरं नचेतरत् । भेदकसामग्रीत्वेन भासमानानामप्यनेकेषां धर्म्मवैजात्यमेव भेदकतरम् । तद्धि प्रमुखीकुर्वाणाः प्रतिवर्गीणा न केनचिद्भङ्ग्यन्तरेणान्यथयितुमवकल्पंते स्थितिस्थापकसंस्कारस्थानीयत्वात्तस्य । यद्यपि राज्यसत्तान्ततः पार्थक्येन प्रयुञ्जानाः प्रतीयन्ते प्रभवः साम्प्रतम् परमेतत्कथनायैवालम्बाह्वतः नत्वाचरणाय निश्छलम् । आन्तरीभिर्विचारणाभिः स्वधर्म्मसत्तामुत्तेजयितुमुद्यतमाणाः सम्मीयन्ते अपह्नुवाना अपीममर्थं क्रिया केवलमुत्तरमिति शृण्वानैः किमिति विश्वस्येरन् । नैवाहि सर्वथा । एवञ्च यवनपारसीका अपि तद्वितीर्णाधिकारा एव न निजसदनसम्पन्नाधिकारसम्भृताः कथञ्चिद्द्वोभयोः पक्षयोः पारवश्यासहनमभिप्रेयमाणं गम्यते तर्ह्येकान्तरितसत्ताऽसहनमपेक्ष्यानेकान्तरितसत्ताऽसहनप्रसक्तौ तदुपायानुष्ठाननिर्भरप्रयासैरुक्तसामन्तादिभिर्भवितव्यमुदाहृतप्रकारावलम्बिभिः सानुग्रहैः साग्रहैश्चेति पारसीकादिप्रचाल्यमानाकलिताधिकार-

विषयाः शङ्काः परिहरणीयाः । उदयनिदानोपायानामसङ्कीर्णोपायतमं ह्यैकमत्यम् । सैषा सम्पत्तिरार्य्यवर्षे भूयसीभिर्वर्षपरम्पराभिरदृष्टचरी । आलस्याद्यमित्रसन्ततिरनुच्छेद्या । मूलीभूतयोरनयोः प्रहाणमृतेनेतरा सम्पदापाततोऽनुभूयमानाप्युद्दिष्टमहाफलायावकल्पते । तदभिसन्धिमन्तस्तत्त्वतस्तर्हि ते एवास्थाय "कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पत" इति तन्मयतामाभजेयुः विचारान्तराण्युत्सृजेयुः प्रकृष्टतरार्य्यमर्य्यादां नोल्लङ्घयेयुः द्वीपान्तरादिप्रयाणयोजनपरान् विचारानवस्थापयेयुः। आलापविलापादीनस्थाने योजितप्रायान् दर्शितप्रधानप्रत्ययमधिश्रित्य साभिप्रायं मुञ्चेयुरित्येवमाद्येवादिशामो नतु विधान्तरमुपदिशामः । एतेन पारसीकाद्यधिकारादिविषयाः कक्षाविशेषास्त्वकिञ्चित्करतया प्रत्याख्यातव्या एव वेदितव्याः । जापानजानपदगोचराऽप्युत्प्रेक्षा ह्युक्तवदेव विचारास्पदतया प्रत्युक्ता ज्ञातव्याः यावन्निजनिबन्धनिर्बन्धसम्बन्धस्तावदेव स्वस्त्ययनं नेतरथा अपरथा प्रवर्त्तमाना अभूमिरेव कस्यचिदपि व्यवस्थानस्येत्यव्यवस्थितमानवास्सर्वाभ्योऽपि श्रेणीभ्यो भवेयुर्बहिर्भूताः । नहि बहिर्भूतश्रेणीनामन्यादृशो वा नियमबन्धः कतिपयकालव्यापी सुस्थात्मा वा संभवति अव्यवस्थितत्वादेव । नहि द्वीपान्तरगमन निर्बन्धं बन्धनभूतमनुदयहेतुं वा ब्रूमः अपि त्वसम्प्रतिपन्नतद्गोचरप्रयत्नानेवाप्रत्यूहं स्वस्वरूपहानिप्रयोजकाननुजानीमहे यथाश्रुतम् "शास्त्रं हि वत्सलतरं मातापितृसहस्रत" इति मार्कण्डेयमहामुनेर्वाक्यमुक्तार्थप्रत्यायकमनुचिन्तया नादुर्वासनाभ्यो दुराचारेभ्यश्च वर्णाश्रमिबहिर्भूतमानुषाणां मार्गद्वयप्रच्यवनप्रयोजकेभ्यः कदा मुञ्चेम करुणाम्बुधे महेशान इत्युपरम्यतां तत्र तत्र सदैव श्रेयस्कामैः । यद्यपि समस्तवसुधामहायात्रायाः प्रभूतयोग्यताविशेषसम्पादकत्वमभ्युपगच्छामोऽसति निर्णीतप्रामाणिकप्रत्यवायाभावे सति च शास्त्रानिन्दितव्यवस्थास-

द्भावे तद्यात्रा निर्वर्त्तनमहोद्यममभ्यनुजानीयामस्तथाप्यलौकिक-कलाकलापस्याभ्यर्हिततमस्य भारतवर्षैकप्रचारनियततयाऽन्यत्र तदसम्भवः लौकिककलाविलासिन्यस्तु विविधचेष्टासभाविष्टतया-कुदृष्टिकण्टकितविकारसहस्रसमास्कन्दिततया च क्षणप्रभासहोदर-श्रीका विविधविषादानलज्वालामूलाश्चापातरमणीयतरास्तत्रत्या इति न तद्गोचरामपि लालसामप्रतिबद्धकार्यसम्पादनीं सम्पश्यामहे। द्वीपान्तरीणाः कूटभृतो नोत्कृष्यन्ते हिमालयविन्ध्यादिभ्यः आकरवरा अपि तत्रत्या नात्रत्येभ्यो हिमालयाद्युपकण्ठनियतेभ्यः प्रशंस्यन्ते। नद्यस्तत्रत्या नात्रत्याभ्यो भागीरथीगौतमीप्रमुखाभ्यः प्रबलायन्ते। नहि तत्रत्यानि सरांस्यत्रत्येभ्यो मानसादिभ्यो विशिष्यन्ते नापि तत्रगा महीरुहा अत्रत्येभ्यो भूमीरुहेभ्यो वरायन्ते नापि तत्रोत्पद्यमाना ओषधिवनस्पतयोऽत्र जायमानेभ्यस्तेभ्योऽतिरिच्यन्ते। नापि पुनस्तद्भूमियोनयो गुल्मवल्लीमुखा इहत्याभ्यस्तद्व्यपदेशभागिनीभ्यः प्रभूतगुणायन्ते नापि तद्धरित्रीप्रभवा कुञ्जरतुरगगोमहिष्यादय इह प्रभवेभ्यस्तदादिचतुष्पदेभ्योऽतिशेरते। नापि पुना राजप्रजास्तत्रत्या ह्यत्रत्याभ्योऽधिवर्त्तन्ते यमंशमाश्रित्यातिशयोद्भावनं न सोऽतिशयोऽपि त्वाभास एव रजस्तमोभ्यामभिभूतत्वात्परिणामे स इति विवृतप्रकारप्रत्यासत्तिमास्थाय तेषां मन्यतां तावत् सुमतिभिस्तारतम्यपरिज्ञानशलाकैरित्यलमतिपल्लवितेन।

कतिपये तु"जीविका यत्र रुचिरा स्वदेशोऽसौ विधीयते। यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः। यत्र देहसुखन्नास्ति न तत्र दिवसं वसे"दित्यादिप्रामाणिकवचांसि सन्ति भूयांसि महतामपि प्रवृत्तिरेवम्प्रकारैव कालत्रये "अथातो दीर्घजीवितीयमध्यायं व्याख्यास्याम" इत्युपक्रम्य प्रवृत्तचरकार्य्यवचांसि शारी-

रमहोदयनिरूपणपराण्येव सन्ति न द्वीपान्तरगमनं प्रतिषेधन्ति भिद्यन्ते ह्योषधिवनस्पतयः प्रतिद्वीपम्। उपयोगस्तेषामामयभेदान्न द्रूष्य एवातुराणाम् महार्हा मण्याद्यर्थाः सर्वैरिष्यन्त एव तत्कस्य हेतोर्द्वीपान्तरगमनादिरोधकं प्रकरणजातमिति विवदन्ते तदसारं तथाहि नह्यादिमाभ्यां वाक्याभ्यां स्वार्थाभिसन्धायकता द्वीपान्तरे क्कुत्रचित्कदाचिद्वाचोभङ्ग्या गम्यते अपि तत्रैव व्यवस्था जीविकादिगामिनी यथायोगं निगद्यते विनिगमनायां द्वीपान्तरेऽपि साऽभिमन्येत तदा रोचकवाक्यानां प्रवृत्तिर्हीयेत विधिवाक्यमेकं वोदाहर्त्तव्यम्। न कुत्रापि तदाकलनम्। परिशिष्टसमस्तार्थविधायीनि वाक्यानि कुप्येरन् श्रौतानि स्मार्त्तानि च तत्तान्यनुपमृद्यमाङ्गलिकजीविकास्तुतिपरे एव वाक्ये ते अवगन्तव्ये तात्पर्य्यनिर्णायकप्रकरणस्याविस्मर्त्तव्यत्वात् अपरथा कयाचिद्व्यपेक्षयाऽऽपन्नं पदमन्यार्थपरं नीयेत। अप्राकरणिकार्थप्रसक्तौ वाक्यार्थानन्वयविधया वक्तुर्योजयितुर्वा वक्ती रमणीयैव माननीयप्रज्ञस्यापतेत्। स्वावेशमेव जानाति केवलं मन्दधीरिति सङ्गमयति वाचम्। एवञ्च सतां वर्त्तनमशेषार्थसमन्वयपूर्वकमेव कालत्रये नत्वपार्थगत्येत्युन्नेयम् प्रथमाम्प्रतिज्ञामुपक्रम्यापरिसमाप्तेर्देशकालसलिलानिलवयोविशेषानुपलक्ष्य प्राणिनः प्रत्युपदिशता चिकित्सां प्रतिपिण्डनिदानमालोच्यैव चरकाचार्य्येण विहिता सा कथमन्यतमदेशीयस्य ततोऽन्यतमदेशादि विशेषाननुक्रमतयोपलक्षयेत्। नहि शैत्यप्रधानप्रान्तजन्मा जीवो मनागप्यौष्ण्यभूयिष्ठे शैत्योपचारानृतेऽवस्थातुमीष्टे कश्चित्। एवमन्योन्यं समुदाचरत्प्रकृतिविन्यासादयः कथमभेदप्रतीतिमाभिदध्युः नाडीं नाडीम्प्रति नायन्नायमुज्जृम्भते प्रभञ्जनो निजवाहिकान् प्रतिनियतदेशादिवैचित्र्यसम्मीलितानवरतम्। अमुयैव दिशा शारीरश्रियमनुभावयन् कथमार्य्यवर्षीयाणामनार्य्यवसतिविशेषपुरोगमान्प्रतिकूलप्रायानभिप्रैति वैद्या-

चार्य्यशिखामणिः । अमुकामयविनिर्म्मोकायाप्रयोजकं भारतं वर्षं द्वीपान्तरं हि तत्वेन सेवितव्यमिति वदद्वाक्यं न किञ्चित् पश्यामः। द्वीपं द्वीपं भिन्ना अप्योषधिवनस्पतयोऽभिन्नं व्याधिमसमर्थाः क्षपयितुमिति वा न काऽपि प्रतिज्ञा। अपितु तदसम्पत्तिसन्देहविरहो वनारण्यविस्तरेषु हिमवद्विन्ध्यरैवताचलार्बुदाचलाद्यनेकभेदभिन्नेषु सर्वदा सर्वथैव। किञ्च महाकुलाचलतया जगतीतले हिमवानेव प्रथीयान् तदनुविन्ध्यादयोपि तथा यज्ञियदेशतया सारिष्ठानामोषधिवनस्पतीनामिहैव त्रैकालिकप्रभवसम्बन्धसम्भवात् "तेषाङ्कुरुक्षेत्रं वेदिरासीत्। तस्यै खाण्डवो दक्षिणार्द्ध आसीत् तूर्घ्नमुत्तरार्धः परीणज्जघनार्द्धः मरव उत्तर" इत्याद्याः श्रुतयोऽत्रानुकूलतराः देवानां सत्रमहायागप्रसङ्गमनुकूलयन्त्यः "तृतीयस्यामितो दिवि सोम आसी"दिति श्रुतिसिद्धद्युलोकावस्थानमहाविभूतिः सोमवल्लीद्युःस्थानप्रतिनिहिततया भारते वर्षे यज्ञनिष्पादनायावतारिता विश्वसृजा प्रकृष्टाध्वरप्रस्थानविलोपवशात्तस्याः प्रचारबाहुल्यप्रसक्तिमाकलय्य "यदि न सोमं विन्देत पूतीकानभिषुणुया"दिति श्रुतिः सोमाभावे पूतीकव्यक्तीः प्रतिनिधातव्यतया विदधती तदाद्यलौकिकलताविशेषभूमितया भरतखण्डमेवाभिधत्ते नहि सोमः कुत्रचित्कदाचित्खण्डान्तर आसीदस्ति च। शौर्य्यधैर्य्यपराक्रमादीनां षण्णवतिलोकोत्तरगुणानां योनिः सोमः पातारस्तस्यर्त्विग्यजमाना ब्रह्मक्षत्रसत्तमास्तावद्गुणमन्दिरतया प्रथिताः तावदौन्नत्यमनवच्छिन्नं भारतवर्षस्यानुभविकम्। सम्प्रति परिशिष्टानन्तौषधिमहामण्यादिसत्ताया योजकदौर्लभ्यमालक्ष्य प्रयोगाविषयत्वेऽपि नोच्छिन्नाः स्थानतः। तथाच समस्तं वस्तुबीजात्मना व्यवतिष्ठत इत्यणोर्म्महतो वाऽर्थस्याप्रतिपत्तये नाश्रयितव्यं खण्डान्तरमिति दिक्।

नहि गान्धारं कांधार इति पातालं अमेरिकेति व्यपदेशभाग्भ्यो

यवनादिराष्ट्रेभ्यो गान्धार्य्यादि समाहरणमभूदार्य्यवर्ष इत्यादि चोद्यजालं साधीयः प्रतिलोमाक्षरसमाम्नायसादृश्यसध्रीचीनानां च कल्पनानां निर्मूलत्वात् प्रमाणबाध्यत्वाच्च। क्वचित् ब्रह्मक्षत्रादि विजयदण्डसमासादितयवनादिविषयेषु निजतेजोमरीचिभिरात्मीयतामापन्नेषु तेषामधिवासमूलकल्पनाप्रसक्तावपि नैमित्तिकार्थोदाहरणस्य निमित्तापायेनाग्राह्यचरतया समस्तेतरप्रमाणविचारासहतया च तदादिकल्पनमविचारोज्जृम्भितमित्युपेक्षणीयम्।

ये च केचित्कदाचित्पुरा किल क्षत्रविट्समूहा राज्यवाणिज्ययोः पराभिर्लालसाभिः प्रेरितात्मानो द्वीपान्तरं सिषेविरे। तत्रैव निहितालयाः प्रच्युताशेषस्वधर्म्माणस्तत्रत्या इवाभूवन्नप्याभासकतिचिल्लक्ष्माणो गम्यन्त आख्यायिकाभिः पारसीकादि संज्ञका इति न तैरस्माकमिदानीं काचिदुन्नतिः इतोऽप्यधिकतरा दुर्गतिरिदानीं गमनप्रसक्तानामवाङ्मुखमतीनामिति सर्वतो निरोद्धव्या एवामी ज्ञातव्याः।

आसेतोराहिमाद्रेराच पूर्वपश्चिमोदधिभ्यामाप्रतीतावर्णाश्रमिणो माभवन्तु द्वीपान्तरगमनोन्मुखामनाग्वा, मा च पुनर्म्महाराजमाण्डलिकाः, मा च विद्यार्थिनो वणिग्गणा वा मा च कश्चित्पारवन्तोऽपि व्युत्पादिताशेषशास्त्रार्थमहाम्भोजमरन्दमाधुरीमिलिन्दायमानमानसाः सुहृदयाः। नन्वशेषमानुषाणामपरप्रयुक्तताप्रयुक्तत्वेऽभीप्सिते स्वगोष्ठीनिष्ठसमयमयीभिर्वाणीभिः किमितीतरे निर्वध्यन्ताम् किमिति वोपद्रवाङ्गारव्यथमानमानसान्प्रत्यनार्द्रगीर्भिरुत्प्रेक्षामात्रविषयाः फलातिशयाः प्रबोध्यन्ताम् किमिति वा पुनर्दृष्टहानादृष्टकल्पनयोरुपचरन्ताश्चराचरदीर्घदृश इति चेद्बाढमेवम् तथाप्यनाकलितलोकतन्त्रोऽत्र गम्यते पृच्छकजनः भवानेवात्र पृष्टो व्याचष्टाङ्किंतात्विकीमर्थस्थितिमध्यवसायैवं परिचोद्यते उत तां निजेच्छानुगामितया परिचेष्टुम्। नाद्यः वस्तुनि विकल्पमात्रास-

म्भवात् । न च सामान्यतस्तथात्वेऽपि विशेषाधिगमाय विशेषविचारावतार इति वाच्यम् । सामान्यतो ज्ञातेऽर्थे विशेषविचारो यतः काकदन्तविचारणावत्स्यात् । न द्वितीयः तथात्वस्य प्रतिव्यक्तिभिद्यमानतयाऽव्यवस्थितप्रायत्वापत्तेः यद्यपि लौकिकोऽर्थः कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुमीष्टे निपुणात्मा तथापि कृत्रिमाकारात्तस्मादकृत्रिमाकारो दुष्परिहरो यथाऽग्नावौष्ण्यमप्सु च शैत्यम् कुटिलाकाराणामपि नियतत्वसम्भावनायां कौटिल्याश्रयतया तदेव हि तस्याकृत्रिमं रूपं पर्य्यवस्येत् । वस्तुतस्तु नहि केनचिल्लोके निरङ्कुशेन भवितव्यम् । न वा भवितुमर्हति कश्चित् किमिति व्यसनपारवश्यमपेक्ष्यापेक्ष्यमाणं स्वातंत्र्यं कथनीयं मतिमत्सु । उपात्तस्वांतंत्र्यास्तु सति बाधकेनाभूवन्माङ्गल्यभाजनं कदाचित् नापि च श्लाघापदमपि तु गर्हागोचरा एव सर्वविधा जीवा विहितप्रतिषिद्धव्यवहारवशंवदाः तत्फलभागिनश्च । अस्ति नास्तीति शब्दौ हि तन्नियामकौ । नह्याभ्यां शब्दाभ्यान्तदर्थाभ्याञ्च वर्जिता काचिदस्ति भाषा प्रत्ययो वा । नह्यस्ति पदप्रयोगमात्राद्विपर्य्ययप्रयोगविषयो विषयोनिर्वोढुं शक्यते । नापि च विपरीतम् । नह्युभाभ्यामतिरिक्तः कश्चिदस्ति विशेषो योऽसौ व्यवहारपथमधितिष्ठति द्वाविमौ विधिप्रतिषेधौ बोधयन्तौ व्यवस्थाङ्किल विहितप्रतिषिद्धलक्षणामुपलक्षयतः । सैषा लौकिकालौकिकभेदभिन्ना तदेवहि पुरुषहितानुशासनाच्छास्त्रमित्यभिधीयते । तच्च "शास्त्रं हि वत्सलतरं मातापितृसहस्रत" इत्यार्षाद्वचनादनतिलङ्घनीय प्रतिप्राणिव्यवस्थिताशेषमर्य्यादामहानिबन्धनं सन्न कञ्चित्प्राणिनमविषयीकरोति । नहि कश्चित्तदसम्बन्धाभिधित्सया वर्त्तमानस्तत्सम्बन्धादंशतो वा भूयान्मुक्तः । नहि मेचकानां सन्तमसान्धकारसमाच्छन्नत्वेऽप्यन्तरागवां महिमानमंशुमालिनो मात्रां वा जीवेयुः कालमहामूर्त्तेरप्स्वन्तरावर्त्तमानमीनादीनामचलेष्वन्त-

रासभखरङ्केकादीनाञ्च कोऽन्वन्योऽर्य्यम्णश्चेतयिता। वायुमेव चेष्ट-यितारं ब्रूषे तर्ह्यशेषचेष्टयितुश्चेष्टयिता निश्चेष्टः परिशिष्यते पर एवात्मा। एतेन परमात्मपारवश्यमशेषाणामिष्टतममनपनोद्यञ्च सिद्ध्यति तदा "श्रुतिस्मृतिसदाचारा आज्ञारूपा हि मे मताः। आज्ञाच्छेदी मम द्रोही स याति नरकं सदा। निश्वासभूता मे विष्णोर्वेदा जाताः सुविस्तराः। अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष"मिति श्रुतिस्मृत्यादयस्तदनुशिष्टास्तत्प्रतिनिधिभूतास्तद्वदेवाचरन्ति वक्तृवचनयोरनन्यप्रतिपत्तिवदित्यध्यवसातव्यम्। नहि वक्तृपराधीनानामतद्वचनपरायत्ता असति प्रबलप्रतिबन्धके भवेयुः सुस्थात्मानः। एतेन शास्त्रपारवश्यमीश्वरपारवश्यसममास्थेयम्। एवञ्च न स्वगोष्ठीनिष्ठसमयमय्यो वाचः किंविषया इति क्रुधं माकृथाः। ये हि महान्तोऽपि जानन्तोऽप्यद्यूतखेलनादिनियतिमतिलङ्घ्याम्बभूवुर्युधिष्ठिरादयो न ते कथञ्चित्तत्फलभूतगिरिकाननाद्युत्कटप्रवासजन्मनो मुक्ता बभूवुर्दुःखात्। उपलक्षणमेतद्विहितानुष्ठानातिक्रमणमात्रस्य निषिद्धाचारगोचरप्रवर्त्तनासामान्यस्य च किमुतार्वाचीनानामर्वाचीनविचारावधीरितसदध्वनामिति ग्रहणीयम्। राजानो राज्यागमप्रशस्तिभिर्निर्बद्धाः प्रजाः किल स्वस्वनियोगानिर्वर्त्तनप्रत्ययायत्ताः महर्षयः परमार्षदर्शनप्रयोगयोग्यताकतया प्रख्याताः। आचार्य्याः किलान्वर्थाभिधानतया "आचारङ्ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिम्। आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि। स्वयमाचरते यस्मात्तमाचार्य्यं विदुर्बुधा" इत्यादि नैरुक्तादि प्रमाणनिर्णीतपरापरधर्म्माणः प्रकीर्त्यन्ते। शिष्याश्च शासनीयप्रामाणिकाभिधेयेष्वद्विष्टसाधनताग्रहानुकूलाः संक्लृप्ताः पित्रादयः पितृधर्म्माव्यभिचरितव्यवस्थाकतयाऽऽबद्धाः पुत्रादयः स्वेति कर्त्तव्यताविलोपनिजोद-

यालम्बितयाऽनुबद्धाः एवमितरेऽप्यात्मकर्त्तव्यतालक्षणविधानैक-निर्बद्धकरणव्यापारा अप्यन्यथाऽनुवर्त्तनप्रत्ययिताः पर्य्यायेण वा स्वार्थसमाधानेभ्यो विहन्यन्ते लोका इति स्वक्रियाहानिरेवा-विधिविषयवर्त्तनविशेषफलमध्यक्षमीक्ष्यते। नहि रूपादिनियत-विषयविषयाणीन्द्रियाणि चक्षुरादीनि नान्योऽन्यविपर्य्ययप्रवर्त्त-नावन्त्यालक्ष्यन्ते कदाचित्। न हि महाभूतान्यब्धरित्र्यादीन्या-पादि वा स्वेतिकर्त्तव्यताः परिवर्जयन्तीतरकर्त्तव्यतामुपाददन्ति दृश्यन्ते "अब्धिवद्धृतमर्य्यादा भवन्ति नियताशयाः। नियतिं न विमुञ्चन्ति महान्तो भास्करा इवे"ति वचनपरिप्राप्ताम्बुनिधे-रनवच्छिन्नमर्य्यादानुपालनक्रियासामान्योपमिता महान्तः प्रस्तू-यन्ते। नहि चतुष्पदः स्वसंक्लृप्तचेष्टाविशेषलक्षणं ननु ऋतुकाले-तरकालानभिगमनाद्यतिवर्त्तन्ते बलातिशयपुरोगमैर्य्यादृच्छिकहेतु-भेदैरुपलक्षिता अपि न निजनियमेभ्यो भ्रश्यन्ते च। नहि मही-रुहवल्लीमुखाः स्थिरलोकवर्गीणा अप्यसङ्कीर्णनिजमर्य्यादाः स-त्योऽस्मात्प्रकारान्तरं भजन्ते। तथाच समस्तेतिकर्त्तव्यतानियमा-तिशयलक्षणब्रह्मचर्यसमास्पदैः सर्वैरेव भवितव्यम्। यथाचाऽथ-र्वणश्रवणानि "ब्रह्मचर्य्येण तपसा राजा राष्ट्रं विरक्षति। आ-चार्य्यो ब्रह्मचर्य्येण ब्रह्मचारिणमिच्छते। ब्रह्मचर्य्येण कन्या यु-वानं विन्दते पतिं। अनड्वान् ब्रह्मचर्य्येणाश्वो घासञ्जिगीषति। ब्रह्मचर्य्येण तपसा देवा मृत्युमपाघ्नत। इन्द्रो ह ब्रह्मचर्येण दे-वेभ्यः स्वराऽभरत्। ओषधयो भूतभव्यमहोरात्रे वनस्पतिः। संवत्सरः सह ऋतुभिस्ते जाता ब्रह्मचारिणः। पार्थिवा दिव्याः पशव आरण्या ग्राम्याश्च ये। अपक्षाः पक्षिणश्च ये ते जाता ब्र-ह्मचारिण" इत्यादीनि। ऋजुरक्षरार्थः नात्र ब्रह्मचर्यशब्दः उ-पस्थसंयमवचनः अपि तु प्रतिप्राणिव्यवस्थितेतिकर्त्तव्यता सामा-न्याप्रमदनस्यानितिकर्त्तव्यता प्रसञ्जनाभावस्य च वक्ता ब्रह्मेति

जातिशब्दो भावप्रधानश्च बृहिवृद्धावित्यस्मान्मनिन्प्रत्ययान्ताद्रूपमभिजायते तस्य ब्रह्मणः चर्य्यं ब्रह्मचर्य्यं। तथा च चातुर्वर्ण्यचातुराश्रम्ययोर्य्यथायोगं निषेकादिश्मशानान्ताः ब्राह्ममुहूर्त्तारम्भप्रदोषसमयसमापनीया नित्यनैमित्तिककाम्यनिषिद्धक्रियाप्रघट्टिकाः परब्रह्मयाथात्म्यं चावबोधयन्नवगम्यते वेदः। तत्प्रतिपाद्यसन्नियतेतिकर्त्तव्यताविशेषलक्षणमविगीतव्यापारपरम्परासमवेतत्वमभिनिष्पन्नार्थः तथा चोक्तनियमातिलङ्घने साहसिकताऽवसीयमाना दण्डार्हतैव तद्भक्तामवधारितव। नहि नियमातिवर्त्तिभिः कश्चिदर्थः प्रतिष्ठाप्यते प्रत्युत परमेश्वरसेतुभेत्तृतया समस्तसन्मार्गसमुच्छेदकानां कुतो नियमानुपालनमिति निर्बन्ध एव प्रत्यर्थमवधार्य्यतां तावत् दुर्हृदयैः। पुरुषव्याघ्रा एव पुरुषार्थान् यथोक्तलक्षणान् साधयेयुः नतु कदाचित्पुरुषगोमायवः। अधर्म्माचारमहाङ्गारपीड्यमानमानसानां निगमागमादि निर्दिष्टाचारजाह्नवीमहाह्रदावगाहनमृते न मन्वन्तरेऽप्यापन्नतापत्रयोपशमः न वा यथार्थफलावाप्तिप्रत्याशा किमुत सदर्थसत्फललवावेक्षणं स्वप्नेऽपीति संक्षेपः।

ननु "द्विजस्याब्धौ तु नौयातुः शोधितस्याप्यसङ्ग्रह" इति पौराणिकोक्तिमनुकृत्य "प्रत्यन्तदेशगमननिमित्तपुनःसंस्कारे कृतेऽप्यब्धौ नौयातुः संसर्गः कलौ निषिध्यत"इति संस्कारकौस्तुभकारादिनिर्णयैदम्पर्य्यपर्य्यालोचनया कृतप्रायश्चित्तानामप्यसंव्यवहार्य्यता कथमवकल्पतामिति चेन्न। अस्वमनीषिकातन्त्रत्वात्तथाहि "गवार्थे ब्राह्मणार्थे च प्राणत्यागः कलौ न हि। द्विजानां गोपशूद्रादौ भोज्यान्नत्वं कलौ नहि। शिष्यस्य गुरुपत्नीषु न चिरं वासशीलता। आपदि क्षत्रवैश्याश्च वृत्तिं विप्रः कलौ त्यजेत्। कलौ द्विजो नहि भवेदश्वस्तनिकजीविकः। द्वादशाब्दं गुरौ वासं मुखाग्निधमनक्रियाम्। यतेर्भिक्षां सर्ववर्णे कलौ त्रीणि विवर्जयेत्।

नवोदकनिषेधश्च दक्षिणां गुरुवाञ्छिताम् । वृद्धरुग्णादिमरणं जलाग्निपतनादिभिः । गोतृप्तिमात्रे भूयिष्ठे पयस्याचमनक्रियाम् । पितृवादे साक्षिदण्डं कलौ पञ्च विवर्जयेत् । घृतदुग्धादिभिः पक्वमन्नं शूद्रात्कलौ त्यजेत् । भिक्षामटन् यती रात्रौ न वसेद्गृहिणाङ्गृहे । विधूमसन्नमुसले काले भिक्षाङ्कलौ त्यजेत् । चत्वार्य्ब्दसहस्राणि चत्वार्य्ब्दशतानि च । कलेर्य्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । सन्न्यासश्च न कर्तव्यो ब्राह्मणेन विजानता । त्रेता परिग्रहः सर्वाधानं । अर्द्धाधानं स्मृतश्रौतस्मार्त्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानन्तयोरैक्यकृतिः पूर्वयुगाश्रया । समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासु कन्यासूपयमस्तथा । देवराद्यैः सुतोत्पत्तिर्म्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा । दत्ताक्षतायाः कन्यायाः पुनर्दानम्परस्य च । दीर्घकालम्ब्रह्मचर्यं नरमेधाश्वमेधकौ । महाप्रस्थानगमनङ्गोमेधश्च तथा मखः । इमान्धर्म्मान्कलियुगे वर्ज्यानाहुर्म्मनीषिणः । मद्यं वर्ज्यं महापापे मरणान्तविशोधनं । सौत्रामण्यादि यज्ञेऽपि सुरापात्रग्रहस्तथा । मद्यभक्षादिवामाद्या गमस्यतु नमानता । मीमांसा द्वितये सर्वे शिष्टैश्च तदनादरात् । औरसोदत्तकश्चैतौ पुत्रौ कलियुगे स्मृतौ । अन्यान् दशविधान्पुत्रान् क्रीताद्यान्वर्जयेत्कला''वित्येवमादि वाक्यशतेभ्यश्चावान्तरापवादसंसर्गभागिभ्योऽपि पौराणिकेभ्यस्तुल्यप्रत्यासत्तिकानेककार्य्यावरोधपरमोद्देशं प्रति प्रवृत्तविशिष्ट जन्मभ्यश्च साक्षादेव निषेधेऽवगम्यमाने निषेधमूलीभूतदुराचारनिबर्हणस्य च युक्तियुक्तत्वे तद्भङ्गकोत्प्रेक्षाविशेषाणामयुक्तियुक्तत्वात् । "अश्वालम्भं गवालम्भं सन्न्यासम्पलपैतृकं देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जये''दिति स्मृतेरुत्सर्गविधया ज्ञायमानाया "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । संन्यासमग्निहोत्रञ्च तावत्कुर्यात्कलौ युग'' इति पराशरस्मृतेर्महापवादभूतायाः पारिव्राज्याग्निहो-

त्रयोरनुष्ठानावश्यम्भाविता विधायिन्याः प्रस्तूयमानत्वाच्च । येषां तयाऽश्वालम्भगवालम्भपलपैतृकदेवरवरणानां निषेधः कण्ठोक्तः न तेषामन्यतमस्याप्यपवादकन्तत्रचान्यत्रचाधिगच्छामो वचनं किञ्चन अतोऽपवादाभावे उत्सर्गस्यैव सम्प्रतिपत्तिर्दृढतरा । एकनिषेधस्येतरविधिनान्तरीयकत्वात् । यदि प्रयत्नेनान्विच्छंतो नचेदपवादमवगच्छेमहि निरपवादत्वान्निर्दुष्टमेव मन्येमहि तस्माच्चतुर्णान्तेषामाचारगोचराऽऽशङ्कासातङ्का । नच कलियुगीयव्यवस्था विधायिन्यां स्मृतौहि पाराशर्य्यामुदाहृतवाक्यवत्समुद्रयाननिषेधजननं न किञ्चनवचनमुपलभामह इति भ्रमितव्यं । यथोक्तनिषेधविषयाणां पञ्चानामैककण्ठ्यस्योपलक्षणविधयेतरेषामपि विषयीकरणात् । वाक्यवाञ्छायां वा । समुद्रयानगमनं ब्राह्मणस्य न शस्यते । सम्भवेद्यदि मोहेन पुनः संस्कारमर्हतीति तदीयाया एव स्मृतेः प्रसिद्धतरत्वात् । ननु मूलभूतश्रुतिमन्तरास्मृतौ कमपि निर्भरमाधातुम्प्रभवामोज्ञापयितारो वा कार्य्याकार्य्यविचारणायां कथङ्कारं स्तिमितपदाभवेयुर्विना तामिति नैषदोषः स्मृतेः श्रुतिप्रतिनिधिरूपत्वात् स्मर्यत इति स्मृतिरिति कर्म्मव्युत्पत्त्या नहि स्मर्य्यमाणोऽर्थः प्राचीनानुभूत्यविषयः स्मृतत्वव्यवहारोच्छेदापत्तेः । नहिसंस्कारमृते स्मृतिः स्वरूपसतीस्मृतेः कार्य्यभूतायाः प्रतीतिं प्रत्यनुभवस्थानीयया कारणतावच्छेदकावच्छिन्नया कया चिद्भव्यत्त्या भवितव्यम् सा हि श्रुतिः तस्याश्चानेकशाखाभेदभिन्नतया समुत्सन्नशाखाविशेषश्रुतीनाम्पठ्यमानशाखागतानाञ्च तासां समुच्चयविधयार्थव्राताः स्मृतामहर्षिभिः । नह्येकतमो वा निरूपितोऽर्थस्तेषां स्वोत्प्रेक्षाविषयः तथात्वे च स्मृतिरिति संज्ञाया एवानुदयापत्तेः उच्छृङ्खलार्थव्युत्पादकतार्किकनिबन्धवद्धर्म्मानुष्ठाने मनागपि ज्ञापकताप्रतीतेरनुत्पत्त्यापत्तेश्च-प्रतीयन्ते ह्युपक्रमपरामर्शोपसंहारैर्धर्म्मतत्त्वनिरूपणबद्धसन्धा एव स्मृतयः । न च हारीतस्मृतौ तप्ताङ्कनादि ।

गर्हिताचारवादिनो वाक्यगणाः किलार्वाचीनधूर्तमानवैः श्रुतीरपि तत्परतयैव योजयद्भिरारचितास्तथैवान्यास्वपि निक्षिप्ता एवमादि वाक्यनिकराः किमित्याद्रीयन्तामिति साम्प्रतम् हारीतस्मृतौ गम्यमानपञ्चसंस्कारादिविषयाणां मन्वादिसमस्तस्मृतिसंवादगन्धमात्रेणापि वर्जितानां वेदवेदाङ्गमीमांसादिमर्य्यादाबहिर्भूतानाक्षेपकतरताया निरपवादत्वेऽप्यन्यासु प्रागारभ्य व्याख्याविशेषोपबृंहितासु प्रक्षेपानवकाशतया क्षेपकवाक्यविषयकल्पनानां निरवकाशात् । नहि परिगणितस्मृतिकाराणां संवादसमुल्लसितविषयविशेषाणां हारीतस्मृतिसंपन्नानां मनागपि संशय्यते प्रामाण्ये । न वा कल्पसूत्रैः प्रसङ्गवैरूप्याद्धस्तीकृतविषयविशेषाणां तस्मिन् परीक्षकैस्तथा । अपि त्वपरामृष्टसंवादगन्धानधिकृत्यैवाप्रामाण्याध्यवसानमन्यथाऽनुपपत्त्या दुष्परिहरम्पर्य्यवस्यति । एतेन तदादि क्षेपकवाचामप्रामाण्याभावसाधकतयाऽऽश्रीयमाणकल्पनाभेदाः केषाञ्चित् प्रत्युक्ता वेदितव्याः । सामुद्रविहारद्वीपान्तराभिगमनयोः कण्ठत उपलक्षणतो वा मन्वादीनामशेषस्मर्तॄणामप्राणिकतया व्युदसनीयताविषयत्वलक्षणसंवादभेदो यथोपन्यस्तविष्णवादिवचनेभ्यो व्यक्ततरः तथा च न केनापि स्मृतिकारेण तयोरप्रामाण्याभावोऽपि प्रतिषिद्धोऽर्थोऽनुमतो भवतीति न्यायाभासोपमर्द्दनपुरःसरमुपवर्णित इत्यास्तां तावन्नीरसशङ्कासमुन्मेषसंभ्रमः । "अथ । देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि । रक्षेदेव स्वदेहादि पश्चाद्धर्म्मं समाचरेत् । येन केन च धर्म्मेण मृदुना दारुणेन च । उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत् आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तये"दिति पराशरस्मरणानि देशोपद्रवप्रवासादि परिगणितप्रसङ्गेषु स्वदेहदारापत्यक्षेत्रवित्तादि विषयामेव रक्षामवश्यानुष्ठेयतया विदधन्ति न धर्म्माचरणस्य तथा विश्वतामवबोधयन्ति । अपि त्वापत्समयसमनन्तरमेव स्वस्थावस्थायां सति सा-

मर्थ्ये तदितिकर्तव्यतां भाक्ततयोपदिशन्ति। अधुना चापगतराज्य-विद्याद्रविणस्थितयो भारतवर्षीया वयमिति कस्मा अस्माकम्प्रयोजनाय धर्म्माचरणमिति युक्तमुत्पश्याम इत्याशयवन्तो निराचिकीर्ष्यन्ते । तथा हि गृहग्रामयोर्दाहे दुर्भिक्षादौ च सार्वजनीनापत्परम्परामनवच्छिन्नचेतोव्यग्रताविधानलक्षणामालक्ष्य तन्मोचनैकनिर्भरप्रयोजनपरतैव तेषां न तु विहितानुष्ठानपरितित्याजयिषाविषयता जातुचित् असत्यां गतावन्यथानिरूपणस्यापतनमर्थानुकारि सन्नस्थानिन्यर्थे परमेतिकर्त्तव्यतानिरूपितयोग्यतावच्छेदकत्वं प्रतिबध्नात्यंशतो वा सदैव स्थानितया सन्नियतानास्थाने निजभावमुज्झित्वा भाक्ततां क्वचित्कदाचिद्व्रजेयुः विपन्नव्यक्तीनां प्राणरक्षाविधापि प्रक्रमान्तरसंयोजनवशादन्यथाऽनुमानमस्थानिकतां न जहात्येवेति न तत्र सुमनसामादरलवो लवितरि केदाराऌनव्यापारवदित्यवधेयम् । न हि प्रयोज्यरक्षाप्रयोजकरक्षामृते विन्दते निजभावं स्वरूपेण सन्तम् । न हि प्रयोजिकां धर्म्मसत्तामवस्थाप्य प्रयोज्यैः क्षेत्रवित्तादिभिः सप्रयोजनैः सप्रमाणैर्वा भवितव्यम् । एतदेवाभिप्रेत्य "धर्म्मेण पापमपनुदति धर्म्मे सर्वम्प्रतिष्ठितं तस्माद्धर्म्मं परमं वदन्ति" धर्मो रक्षति रक्षितः। धर्मो वंशे विपन्नं च त्रायते महतो भयादिति श्रुतिस्मृती निरस्तसमस्तानर्थसार्थां प्रयोजकसत्तामवबोधयन्त्यावगन्तव्ये निरपवादानुभूतिनिरूपिके युक्तात्मभिः । एवञ्चास्तव्यराष्ट्रादिसम्पत्समीहासमाक्रान्तमानसानामुपायानुष्ठानतत्पराणामुपायतमभूतधर्म्मापेतादिकारित्वमधुनातनानाम्फलाय कस्मा अभिप्रेयत इत्यभिप्रायवन्तो विविच्य तत्त्वमवतिष्ठन्तामिति कृतमकृतिचिन्तया ।

ननु "वेदो धर्म्ममूलम् उपदिष्टो धर्म्मः प्रतिवेदम् ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतव" इत्यादि मनुबौधायनगौतमादिस्मरणेभ्यो वेदस्यैव सकलेतिकर्त्तव्यताप्रतिपादकतया ज-

लधिया न द्वीपान्तराभिगमनयोर्निषेधकं वचनं वयं वैदिकमेवाद्रियामह इति। नैष दोषः "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास तꣳ ह जीर्णꣳ स्थविरꣳ शयानं इन्द्र उपव्रज्योवाच। भरद्वाज, यत्ते चतुर्थमायुर्दद्यां। किमेनेन कुर्य्या इति। ब्रह्मचर्यमेवैनेन चरेयमितिहोवाच। तꣳ हत्रीन् गिरिरूपा न विज्ञातानिव दर्शयाञ्चकार। तेषाꣳहैकैकस्मान्मुष्टिमाददे। स होवाच। भरद्वाजेत्यामंत्र्य। वेदावा एते। अनन्तावै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्वविद्येति। तस्मै हैतमग्निꣳसावित्रमुवाच। तꣳस विदित्वा अमृतो भूत्वा स्वर्गं लोकमियाय। आदित्यस्य सायुज्य" मित्याद्याभिर्य्यजुर्ब्राह्मणश्रुतिभिः समस्तवेदावाप्तिगहनतालक्षणगाम्भीर्य्यातिशयस्य सर्वज्ञकल्पहिरण्यगर्भमनुगौतमादिनिषेवितस्य "लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति स्मृतिप्रतीततपोमाहात्म्यसमवाप्तसकलवेदार्थविज्ञानमहर्षिकर्तृकस्मृतिकुल्याप्रवहद्विषयवारिप्रस्थानान्तरमापन्नस्य स्मृतिस्थानीयकुल्यात्मनैव निषेव्यमाणस्यासम्भवन्त्यामपरोक्षप्राप्तावनन्यप्रत्त्यासत्तिकतायाः समादरणीयत्वात्। ताभ्यः प्राचीनया "अथ यो हैवेतमग्निꣳसावित्रं वेदेति" श्रुत्या विद्याहीनस्य समृद्धफलाभावलक्षणव्यतिरेकप्रदर्शनपुरस्सरं विद्यासम्पन्नस्य सम्पूर्णफलसद्भावात्मकमन्वयं दर्शयित्वाऽन्वयव्यतिरेकाभ्यां विदुषः फलबाहुल्यमतितरां प्रशंस्य विद्यां तां प्रशंसितुमाख्यायिकां दर्शयति भरद्वाजेत्यादिना वचनजातेन। पुरा किल कदाचित् महर्षिर्भरद्वाजः समस्तानां वेदानामध्ययनमुद्दिश्य गुरुकुले वासं कृतवान्। एवं शतत्रयवत्सरान्ते जीर्णं शरीरं वृद्धं अशक्ततया शयानं तं भारद्वाजम्प्रति इन्द्रः उपेत्य उवाच यच्चतुर्थमायुः तुभ्यं दद्यां एतेन आयुषा किङ्कुर्य्याः कं किल पुरुषार्थं साधयसि इति प्रश्नसमनन्तरं स च वेदाध्ययनमेव करिष्यामीत्युवाच। ततः सर्ववेदा-

ध्ययने कृतास्थं तम्भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुमृग्यजुःसामवेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं सम्पाद्य गिरित्रयरूपान् पूर्वमविज्ञातानेव वेदानस्मै दर्शयामास। ततः तेषां वेदपर्वतानां मध्ये एकैकस्मात् पर्वतात् मुष्टिना पांसूनाददे जग्राह आदायैवं उवाच। हे भरद्वाज एते त्रयः पर्वताः वेदा एव तत्रैकैकः पांसुरेको वेदः तस्मात् अनन्ता वेदाः तेषां मध्ये त्वं एतैस्त्रिभिरायुर्भिः "शतायुर्वै पुरुष" इति श्रुतेः शताब्दपरिमितमेकमायुः तल्लक्षणैस्त्रिभिरायुर्भिः त्रिशतसङ्ख्याकैर्वत्सरैः एतत् मुष्टित्रयपरिमितं वेदजातं अन्ववोचथाः "वच परिभाषण"इत्यस्मादन्वित्युपसर्गपूर्वाद्रूपं लङि जायते। गुरूपदेशमन्वधीतवानसीत्यर्थः। अथ अनन्तरं तव इतरत् वेदजातं अननूक्तं अनधीतं एव तस्मात् सर्ववेदाध्ययनमशक्यमेव। यदि सर्ववेदाध्ययनफलमपेक्षितं तर्ह्येहि आगच्छ इमं सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्या इति। इत्थं बोधयित्वा तस्मै भरद्वाजाय एतं सावित्रमग्निं प्रागुक्तप्रकारेण उवाच। ततः स भरद्वाजः तं सावित्रमग्निं ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयं अमृतः देवो भूत्वा वर्त्तमानदेहादूर्ध्वं स्वर्गम्प्राप्य तत्र आदित्यसायुज्यं प्राप्तवानिति तद्वाक्यार्थः। न च तत्र वेदानामानन्त्येन भुज्व्याद्युपाख्यानवदितरा अपि विधिप्रतिषेधचोदनास्तदेकतमवेदशाखायां स्युरेव सर्वशस्ततो नो विचारविषयाब्धियानादिसिद्धिः सूपपादेति न्याय्यम्। निःशेषवेदान्तर्गताशेषविधिप्रतिषेधचोदनाविषयविषयाणां हिरण्यगर्भमन्वादिमहर्षिभिः स्वकीयासु स्मृतिषु कण्ठतश्चोपलक्षणतो वा निर्व्यग्रमाबद्धतया तत्र तयोः समुद्रयानद्वीपान्तराभिगमनयोराग्रहभरेण प्रत्याख्याततया चान्यथोद्भावनस्य दुरावेशशीलितत्वात्। नहि भरद्वाजस्य भगवतो लोकालोकदरीप्रचेतनमहोद्यतगुणाखण्ड-

लस्याखण्डाम्नायाध्ययनखण्डने के ते परिशिष्यन्तां महर्षयः परिसमापिता खण्डशाखाध्ययना यैरमूः प्रणीताः स्मृतयः कृतवेदार्थसंदृब्धा भवेयुरिति सम्भवति। त्र्यायुषपरिच्छिन्नाध्ययनोद्योगैकसाधनसाधितेप्यनन्तवेदविद्यापरमहिम्नि सावित्राग्निविद्यासाक्षात्कारप्रभवनिरुक्तानन्तवेदार्थसमृद्धपरिज्ञानस्य भरद्वाजसमासादितस्य निराबाधत्वेन स्मृतिकारमहर्षीणां विशिष्टविज्ञानसंपत्सम्पत्तेर्य्यथोक्तसावित्राग्निविद्यापुरोगमसाधनसाध्यायाः सम्प्रतिपन्नत्वेन तत्प्रणेतृकस्मृतिविषयकल्पनानाम्प्रकम्पनीयत्वात् । नहि स्मृतिकृतामात्मीयमालम्ब्याभिनिवेशमणीयान्वा स्मृतौ स्वकीयायामर्थो निरूपितो निरूपयितव्यो वा तथाविधायां स्मृतौ स्मृतित्वस्यैवासङ्गत्याऽनुपादेयत्वलक्षणाक्षेपकलापस्य तत्कालमुपक्रम्याभियुक्तैः प्रवर्त्तयितव्यत्वेऽद्यावधि तत्सातत्यानुभूत्यापत्तेः । न तल्लवोप्यालक्ष्यते यमेतमेवम्प्रतिपद्येमहि । तथा च सर्वमुक्तमनवद्यं वेदितव्यम् । यदि चात्थ सावद्यं तदा त्वदीययैव व्यवस्थाव्यक्त्या त्वदीयाया व्यवस्थाया वैतण्डिकीर्युक्तीरवतार्य्य खण्डनीयत्वात् । वादकथामालम्ब्य चेदात्थ तर्हि "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहोवाद" इति सेवस्व पारमर्षं सूत्रमवयवशः सेवस्व च "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमपेक्षता । आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतर" इति मनोर्वचनामृतञ्च धयस्व सोल्लासम् । यदि पुनः प्रमाणप्रच्छन्नसौत्रान्तिकीभूय चेदात्थ तदापि तत्प्रक्रियामेवावतार्य्य प्रक्रियायास्तस्याः प्रत्याख्यानयोग्यत्वादिति स्वभावसुन्दरीभिः प्रशस्तिभिराकलनीयस्तत्त्वार्थ इति दिक् ।

नन्वनुष्ठितसमुद्रविहारद्वीपान्तरपर्य्यटनानां ब्राह्मणादीनां याहच्छिकवैहारिकक्रियासामान्यसाम्यमभिसन्धाय वाणीपरीभावप-

रामर्शनिष्पादनस्यैव यथोपपन्नशासनसमाचारसंस्थानतया तावतैवानुग्राह्यता । नतूत्कटांहस्समाच्छन्नमानवानुग्रहसन्निहितप्रतीकारलक्षणाभिः प्रायश्चित्तप्रक्रियाभिः कदाचिद्वेति चेन्मैवम् । यत्प्रयुक्तप्रायश्चित्तप्रक्रियासमाहरणं मनुष्याणां न तेषां द्वीपान्तरमितानामपात्रीकरणमलिनीकरणानुपातकप्रक्रियाप्रयुक्तप्रायश्चित्तयोग्यताकेभ्योऽतिरेकिताया अन्याय्यत्वात् । यादृच्छिकवैहारिकप्रक्रिया अप्युक्तापात्रीकरणादिसमाविष्टचेष्टाकास्तदा कोऽनु तासां तेभ्य उपादीयमानभेदप्रत्ययः समुचितासमुचितक्रियान्वययोग्यत्वेनैव कल्मषाकल्मषित्वानुगतव्यवहारस्य प्रमीयमानतया तदादिदोषविशेषणमुद्रया यादृच्छिकवैहारिकप्रकरणयोर्न्न स्वरूपसत्ता काचित्सम्पत्स्यते । न वा नविरोत्स्यते निरुक्तपातकसम्पर्करहिताभिर्नरशार्दूलव्यक्तिभिः अपितूभयातिरेकभावाभावस्याप्रसिद्धतया तद्भूषणैरेव साक्षात्सम्भंत्स्यते । नहि वाचां तिरस्क्रियाभिः केवलाभिर्दुरितनिर्म्मार्जनमण्वपि वा संभवत्संमीयते प्रमाणकोटिकाभिर्वाग्भिः । तावतैव चेत्परिमार्जनमिष्येत किल्बिषाणां तर्हि प्रतिव्यक्तिपातकानां सन्नियताभ्युपायवैविध्यप्रतिपादनपरं शास्त्रमुन्मथ्येत तदाद्याकस्मिकोत्प्रेक्षागोचरमेव द्योतंद्योतं प्रसज्येत प्रत्यर्थम् इत्थञ्चानिष्टमेवेत्यास्तांतावदसम्भाव्यसम्भावना ।

एवं तर्हि समुद्रयानद्वीपान्तरपर्य्यटनजन्मा का नु तेषां दोषापत्तिः केन वाऽभ्युपायातिशयेन तद्विधूननमिति । अत्राभिधीयते । यद्यप्यपात्रीकरणमलिनीकरणानुपातकसमष्टिर्व्यष्टिर्वा निरुक्तवाक्यशतेन श्रुतिस्मृतीतिहासपुराणमहाधाम्ना समुद्रमहाविमानयायिनां द्वीपान्तरस्वर्गश्च सेवितवतां प्रसज्येन्न वेति मीमांसन्ते व्यवहारब्रह्मवादिनः तथापि दूषणमदूषणमभिदधच्छास्त्रमपाक्षिकमाश्वस्य यथायोगं मीमांसित्वा च वर्चांसि तज्जातीयदोषवर्चां किल तन्निष्ठामनुमोदयद्भिरेव भवितव्यं तैर्वादिभिः । इत्थञ्च प्रत्यस्तमि-

तपात्रीकरणप्रक्रियालक्षीभूतविलक्षणोत्पादनाविशेषोऽपात्रीकरणम् प्रत्यस्तमितनैर्म्मल्यप्रक्रियालक्षीभूतविलक्षणोत्पादनाविशेषो मलिनीकरणम् महापातकाद्यष्टदोषभिन्नत्वे सति परिगणितपापान्यतमत्वमनुपातकत्वमिति ।

विहितक्रियाविशिष्टपदार्थवत्क्रियात्वं प्रायश्चित्तत्वम् पदार्थे क्रियावैशिष्टयञ्च स्वाननुष्ठानजन्यत्वस्वभिन्नक्रियाप्रयुक्तत्वस्वकालीनेन्द्रियार्थप्रसक्तिप्रयोज्यत्वैतात्रितयसम्बन्धेन। क्रियायां पदार्थवत्ता च स्वध्वंसजनकतावच्छेदकधर्मवत्त्वस्वध्वंसातिरिक्ताजनकत्वोभयसम्बन्धेन। प्रकृते तु विवक्षितदोषाणामपेक्षया लिलक्षयिषितानि भवन्तीमानि। नच परिगणितपापकनवकस्य प्रत्येकं पर्य्याप्तान्यतमवर्गीणेषूद्दिष्टेषु रूढाहि प्रकीर्णक १ जातिभ्रंशकर २ सङ्करीकरणा ३ पात्रीकरण ४ मलिनीकरणो ५ पपातक ६ महापातका ७ नुपातका ८ तिपातकशब्दाः कथमन्यथयितुम्भवेयुर्योग्या इति वाच्यम् । पद्मादिशब्दवदमीषां रूढत्वानुपपत्तेः। अपितु पुण्डरीकं सिताम्भोजमित्यादावम्भोजपदस्य योगरूढत्वेन पद्मरूपद्रव्यवाचकत्वस्यापि व्यवस्थानवत्प्रकृतेऽपि योगरूढतैव तेषामवसीयते अवयवार्थप्रत्यासत्त्यैवाभिप्रेतार्थप्रत्यायनस्य विवक्षितत्वादिति तत्त्वम् । "अकुर्वन्विहितं कर्म्म निन्दितञ्च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति" याज्ञवल्क्यस्मृतिस्त्रिविधानिष्टचेष्टापरिप्राप्तौ निरूपितापात्रीकरणमलिनीकरणोपपातकलक्षणपातित्यमहापत्तिरुग्रतरा जञ्जन्यते। तद्विधूननञ्च प्रायश्चित्तचण्डमारुतचञ्चत्प्रयोगनिबन्धनमाद्रीयते । प्रायश्चित्तं च। विहितप्रतिषिद्धेन्द्रियारमणकर्म्मणामसमाचारसमाचारसमासक्तिसमापन्नपाप्मातिशयनिर्म्मोचनैकलक्षणः कर्म्मविशेषः ।

पात्रीकरणविशिष्टक्रियावद्विलक्षणक्रियात्वमपात्रीकरणत्वम् । वैशिष्ट्यञ्च स्वप्रयोजकत्वस्वसामानाधिकरण्योभयसम्बन्धेन।क्रिया-

वत्त्वञ्च स्वप्रतिबन्धकत्वस्वसामानाधिकरण्योभयसम्बधेन । नित्य-क्रियाविशिष्टविलक्षणक्रियात्वं मलिनीकरणत्वम् । नित्यक्रियावैशि-ष्ट्यञ्च स्वप्रतिबन्धकत्वस्वसमानाधिकरणमालिन्यप्रयोजकत्वोभय-सम्बन्धेन । तथाच "अकुर्वन् विहितं कर्म्म निन्दितञ्च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नर" इति स्मर्य्यते मनुना । य-थोक्तमङ्गिरसा "प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् यथाहुः । प्रायः पापं विजानीयात् चित्तं तस्य विशोधन"मिति च । नरग्रहण-मिह प्रतिलोमजातानामपि प्रायश्चित्ताधिकारपरिप्राप्तये तेषामपि शौचाहिंसादि सामान्यधर्म्मव्यतिक्रमसम्भवात् किमुतानुलो-मजातानां त्रैकालिकसदर्थप्रतिष्ठानयोग्यताकानां प्राग्भवीय-निषिद्धाचरणाक्षिप्तविहितानुष्ठानविरोधिप्रमादालस्यादिनिमित्त-विशेषेण परिणतदुरितात्मनि प्रत्यवाये । न चोक्तयानाभि-गमनयोः प्रायश्चित्तनिमित्तदोषच्छायानुकीर्त्तनमेव केवलं नत्वैका-न्तयथोपपादितत्रिविधप्रकरणान्तःपातित्वमिति मन्तव्यम् । वि-मृश्यमाणयोस्तयोस्ततोऽप्यधिकतरदोषतायाः संयोजयितुमिष्ट-त्वात् । यत्तु यथोक्तनवविधदोषपरिगणनं तदेतत्स्वानुलोमवि-लोमप्रजासांसर्गिकक्रियासम्पातायातम् । तेतु द्वे । स्ववर्णाश्रमा-चारदेशानामशेषाणां मतिपूर्वोत्सर्जनमनुकूलीकृत्य प्रवृत्तप्राये सती नूनमद्य भूयो दूषणबीजभूते साक्षादेवावर्णाश्रमदेशवासविषयी-भूते दोषाकरे एवालक्ष्येते यतो मनुवाक्यमप्रत्यूहमन्वीयेत यथोदा-हृतम् । एवञ्चोदीरितव्यापारद्वयवतामभक्ष्यभक्षणापेयपानादिप्रवृ-त्तिराङ्ग्लद्वीपादि यथोपपन्नसलिलानिलशैत्यादिदुरपह्नवार्थस्व-रूपपर्य्यालोचनया निरपवादतरैवापद्यमाना कथमकल्मषाश्लिष्टा-प्रत्यवायातिरेकविमोका कल्पान्तेऽपि सम्भवेत् अपि त्वनुवर्तमाना सती स्वजन्यदुरितविशेषविधूननाय प्रायश्चित्तायावकल्पत इति

स्थितम्। एतदेवाभिप्रेत्य "नान्यस्मिन्लोके प्रत्यापत्तिर्विद्यते कल्मषन्तु निर्हृण्यत" इत्यापस्तम्बः पठति। याज्ञवल्क्योऽपि "तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये। एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति" अस्यार्थः। यस्मान्नरो निषिद्धाचरणादिना प्रत्यवैति तस्मात्तेन कृतनिषिद्धादिसेवादिना प्रायश्चित्तं कर्त्तव्यमिहामुत्र च विशुद्ध्यर्थम्। कृते किलैवं प्रायश्चित्ते अन्तरात्माऽस्य शुद्धतया प्रसीदति असति विशेषशास्त्रे लोकोऽपि संव्यवहर्तुं प्रसीदति सत्यप्येवं ये खलु नानुतिष्ठन्ति प्रायश्चित्तं दुर्हृदयाः ते तावद्यावज्जीवं विन्दमानास्तिरस्क्रियामन्ते हन्त निरयानेव भजेयुः। यथोक्तं योगीन्द्रेण "प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् १ तामिस्रं लोहशंकुञ्च महानिरयशाल्मली। रौरवं कुड्मलम्पूति मृत्तिकं कालसूत्रकम् २ सङ्घातं लोहितोदञ्च सविषं सम्प्रपातनम्। महानरककाकोलं सञ्जीवनमहापथम् ३ अवीचीमन्धतामिस्रं कुम्भीपाकं तथैवच। असिपत्रवनञ्चैव तापनं चैकविंशकम् ४ महापातकजैर्घोरैरुपपातकजैस्तथा। अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ५" पापेषु उच्छास्त्रप्रवृत्तिप्रभवेषु सम्प्रसक्ता मानवा अपश्चात्तापिनो मया दुष्कृतममुकमाचरितमित्येवंविधोद्वेगहीनाः प्रायश्चित्तमकुर्वाणा दुःसहान्नरकानाप्नुवन्ति तामिस्रप्रभृतींस्तापनपर्य्यन्तानेकविंशतिनरकानन्वर्थसंज्ञान् द्योतितावान्तरभेदान्। महापातकोपपातकजनितभयानकदुरितैरन्विता अप्यनाचरितप्रायश्चित्ता नराधमाः प्राप्नुवन्ति तत् उपचितदुरितप्रतिबन्धापनुत्तये प्रायश्चित्तमनुष्ठातव्यमित्युक्तो भवति तदर्थः तदवश्यंभाविता बोधकश्रौतसूत्रमप्याश्वलायनीयमनुग्राहकम्भवति "विध्यपराधे प्रायश्चित्तिरिति" विधिशब्देन विहितमवबोध्यते अपराधोऽन्यथाभावोऽभावोवा तथाच विहितस्याकरणेऽन्यथाकरणे च प्रायश्चित्तिः कर्त्तव्या। निन्दितानिन्द्रियनिग्रह-

योरप्युपलक्षकोऽयं विधिशब्दः प्रायो विनाशः चित्तिः सन्धानम् विनष्टसन्धानम्प्रायश्चित्तिरित्युक्तम्भवत्यनेन । प्रायश्चित्तिशब्दो दुरितविशेषनिर्म्मोचनात्मनि कर्म्मविशेषे नैमित्तिके रूढ इति भूयोभिरुदाहृतार्थनिगमनैरध्यवसीयते । ननु प्रायश्चित्तैराचरितपाप्माऽपयातीति न युक्तम् । कर्म्मणाम्फलोपभोगनाश्यत्वादिति । नैवम् । दुरितोदयस्य शास्त्रैकसमधिगम्यत्वे तदस्तमयं प्रति न प्रमाणान्तरं क्रमत इति स्वारसिकत्वात् । अत एव पूर्वोत्तरकक्षाभङ्ग्या गौतमेनायमर्थो व्यक्ततरं निरूपितस्तथाहि "अथ खल्वयम्पुरुषो येन कर्म्मणा लिप्यतेऽथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रियाप्रतिषिद्धसेवनमिति च तत्र प्रायश्चित्तं कुर्य्यान्न कुर्यादिति मीमांसन्ते न कुर्य्यादित्याहुः । नहि कर्म्म क्षीयत इति कुर्य्यादित्यपरे पुनस्तोमेनेष्ट्वा पुनः सवनमायातीति विज्ञायते व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानन्तरति ब्रह्महत्यां योऽश्वमेधेन यजतेऽग्निष्टुताभिशस्यमानं याजयेदिति च । न चाभिनिष्पन्नस्वरूपं कर्म्म कार्म्मुकनिर्मुक्तो बाणो लक्ष्यवेधे वेद्धुस्तद्व्यापारस्य वा सत्तां यथा न पुनरपेक्षते तथा प्रतियोगिभूतकर्म्मणः प्रायश्चित्तलक्षणस्य तत्सहकारिभूतस्य वा सत्तामुपादातुं न क्षमत इति वाच्यम् । लोकेऽपि कर्म्मणः कर्म्मान्तरेण भञ्जनविधानस्य दृष्टचरत्वात् । सङ्कीर्णकारणावलम्बि कतिपयचिकित्सादिकर्म्मणामनिष्टापादनयोग्यताकल्पेऽप्यसङ्कीर्णकरणग्रामसमवहितानामनागमिकप्रक्रमाभावरहितानान्तेषामिष्टार्थसमर्थनैकयोग्यताया निरूढत्वात् । नच पुनरागमैकगम्येऽर्थे कालान्तरसाक्षात्कारसंक्लृप्ते कोऽसावद्य प्रायश्चित्तकर्म्मप्रभवापूर्वातिशयो निगम्यतां येन तत्कर्म्मणि किल्बिषवन्तो विश्वस्युरासमन्तादिति साम्प्रतम् । अतीन्द्रियार्थव्यवस्थानस्येत्थंभूतनिद्धारणा गृह्यमाणत्वेन तत्र स्वरमाणमनःप्रचाराणामकिञ्चित्करत्वात् । नहि काचित्क्रिया निर्वर्त-

नवेलायामेव कस्मैचित्फलायावकल्पते यथाऽभिमतम् अपितु कतिपयकालव्याप्त्यैवेति व्यापकानुभवः परमत्र वैगुण्यसाद्गुण्याभ्यामर्थानर्थसमायोगहेतुभूताभ्यां परिच्छिद्यमाना अशेषा एव क्रिया आस्थीयन्त इति यतितव्यमत्र साद्गुण्यसम्पत्तये निराबाधम् । नहि निर्व्यग्रकारकसम्वलने कार्य्योदयो विलम्बं कथञ्चित् क्षमत इति न किञ्चिदवद्यम् । ननु निर्वर्णितदोषकात्स्न्र्यमग्रजेष्वेव सम्भवन्न बाहुजातोरुजातपादजातानामसङ्गतप्रायमालोक्यते लोकयात्रासमर्थनायत्तजन्मत्वात्तेषां हि केवलमिति । मैवम् । चातुर्वर्ण्यस्य "ब्राह्मणोऽस्य मुखमासी"दिति चैकश्रुत्यान्वितत्वलक्षणसामानाधिकरण्येऽन्योऽन्यसाधारणासाधारणव्यवहारकदम्बस्य च निरूपयितव्यत्वे च निकर्षोत्कर्षभावास्पदीभूतश्रौतस्मार्त्तक्रियाधिकारलक्षणवैलक्षण्यस्यानन्यभावसहकृतस्य समाश्रयणीयत्वात् तन्नियतधर्म्मप्रशस्तिमनुपमृद्यैव जगद्व्यापारनिर्वर्त्तनाधिकृतत्वाच्च बाहुजादीनां । नहि लोकव्यवहृतयो धर्म्मप्रौढप्रागल्भ्यमन्तरा स्वरूपसत्तामाधातुमीशते । नहि भूयस्स्वधिकरणेषु तयोरसाहचर्य्यसम्प्रधारणनिमित्तान्वयव्यतिरेकव्यभिचारा वा चिकीर्ष्येते इति भवति कार्य्यसत्तासमसत्ताकत्वाभावलक्षणवैकल्यादेः कारणनिष्ठस्य कार्य्यनिष्ठस्य च विपर्य्ययेण वा ग्रहणीयत्वात् । वर्णाश्रमिव्यवहारस्य चतुर्वर्गविश्रान्तस्य व्यत्यासमन्तरा व्यत्ययेप्यशीर्णोपायध्रौव्य एवान्यविधविचारणा अर्हत्यवकाशम् नापरथा । तथाच क्षत्रियादीनामपि समुद्रयानद्वीपान्तरगमनाभ्यनुज्ञानं न विषयीकरोति कामपि प्रमाणवाचम् । नहि प्रमाणमृते प्रवृत्तिरर्थवत्यपि साधीयसी नवाऽसम्भिन्नार्थमर्य्यादानतिशायिनीं विना प्रवृत्तिं सम्भवेयुरर्थवन्ति प्रमाणानि । नन्व"जितं जेतुमनुचिन्तयेन्न कचिदप्यलम्बुद्धिमादध्यादि"ति सामश्रुती समस्तमहीतलजिगीषाव्यवसितधियमेव बाहुजमनुग्राहयन्त्यौ कथमत्र स्तोकसम्पदा तो-

षातिशयमनुजानीयाताम् विट्शूद्रौ वा कथङ्कारं तयोर्विहितक्रियास्वलंमती आ तन्वातां वदान्यतमे कदाचिद्वा नैष दोषः। विहितराजसूयादिमहोत्साहप्रसक्त्या किल युक्तियुक्तया तदादिनिरतिशयसन्नाहस्य परिकरात्यन्तिकपौष्कल्यसम्मीलितस्य पुरस्तान्निरूपितप्रकारान्यथाऽनुपपत्त्या परमिष्टत्वात् । नहि क्षत्रियविशोर्विजयवाणिज्यक्रिययोरुपचयातिशयं न समीहामहे अपि त्वनार्य्यद्वीपपर्य्यटनादिनिबन्धनार्य्यमर्य्यादापर्य्युदासलक्षणधर्म्मव्यतिक्रममात्यन्तिकोद्वेगनिमित्तभूतमणुतरं वा न सहामहे । न चोभयोः परिपालनपूर्वपर्य्यटनप्रसक्तौ का क्षतिरिति वाच्यम् । एकतरपरिपालनस्यापि तावन्मात्रसमुल्लसितमानसानामप्रत्यक्षंगतत्वस्य भूयोदर्शनानुसंहिततयाऽनुमानप्रयोजकव्याप्तिग्रहौपयिकतर्कस्यैवासिद्धेः । नहि विजयो वाणिज्यं वा तत्तद्गोचराभिः केवलाभिरेव लालसाभिः स्वार्थमर्हति। अपि त्वनेककारकानुष्ठानवीर्य्यवत्तासमन्विताभिः स्थाने यथानीतिरीति च प्रयुज्यमानाभिः क्रियामात्रम्प्रति नियतेषु कारकेषु जगन्नायककरुणाकटाक्षवीक्षणपात्रताप्रतिपत्तिलक्षणनिजधर्म्मानुष्ठानमेव नेदिष्ठमोजिष्ठञ्च । नहि सत्यां तमसत्तायान्तरसत्ता तथेष्यते किमुत सत्तानाम केवला । स्तोकक्रियाम्प्रति सामान्येन कारणभावे निरूपणीये स्वरूपतरयोस्तावन्मात्रनिष्पादनायालम्भावसम्भवेऽपि स्फीतार्थसमुद्धारसमाधानकृते तमसत्त्वैव सातत्येनालमिति समस्तव्यवहारवित्समयातिशयः। यदि तां धर्म्मविषयविषयामेव निह्नुषे कारकान्तरगोचराश्च प्रतिपत्स्यसे कथन्तर्हीप्सिततमां व्यवस्थामुत्तमसत्तया प्रतिपिपित्सेः तमसत्तामुत्तमां मन्यमाना यतमानाश्च तत्कोटिकार्थसार्थेभ्योऽर्थाद्विहन्येरन् । यदि तत्र प्रेक्षावदुपेक्षालक्षणः स्वापराधो विहिताधिकरणः स्यात् तदा वर्धामहे वयं हताः स्थ यूयमिति किमिति वर्णनीया व्याख्यानवैखरी श्लाघनीयप्रश्नस्य यद्यदृष्टध-

र्म्मसत्तायाः प्रकृष्टकारकतामनभिसंधायेतरेषां दृष्टवस्तूनामेवान्यतमे तद्भावोऽभिसंधास्येत तदा तावतैव गतार्थतामनुचिन्त्या दृष्टाभिमुखीः कल्पनास्तद्वैषम्यनिषण्णा व्यथावा कथमेष प्रतिप्रत्ययमाकलयेदाकलयन्वा उपयन्नपयन्भावो मानवं कमप्यविकृतात्मानं न विदध्यादिति विन्देदवसाने व्यावहारिकगर्ववाहोऽपि । सर्वापि व्याकृतस्थितिरव्याकृतपूर्वैव गम्यमाना यथाङ्कुरादिफलपर्य्यन्ता कार्य्यदशा । नत्वे काश्चिद्बीजात्मनाऽवस्थानलक्षणां कारणदशां स्वरूपेण कुहस्वित्कदाचित्केनचिद्वाऽनुभूयते । अनुभवपथमारूढा बीजावस्था पूर्वैव सर्वेति प्रत्युत सैषा रूपान्तरमापन्नेति च कार्य्यलिङ्गकानुमानमेव तद्गमकमवगम्यते लोकतः । वेदतस्तु वचः स्वावयवभूत"मसद्वा इदमग्र आसीत् । ततो वै सदजायते"त्येवमादिकमनेकमनुभूयते । इत्थं चाव्याकृतापरपर्य्यायकारणावस्थालक्षणपरब्रह्मप्रतिनिधीयमानतन्निरतिशयविवर्त्तभूतवैदिकधर्म्मस्यानुष्ठानजन्मा परविभूतिरुत्तरोत्तराया अपरस्या लौकिकविभूते राज्यवाणिज्यादिदशाविवर्त्तमानायाः परमास्पदत्वेन तन्निर्भरभरभागिभिरेव लोकलोचनैरपि श्रेयस्कामैर्भवितव्यम् । न च सदसदर्थसमवाप्तिनिमित्तभूतयोः श्रद्धाऽश्रद्धयोः किमिति स्वपरप्रान्तवासावासविषयिण्यकिञ्चनकल्पनेत्याशङ्कनीयम् । स्वविघटनानुकूलसामग्रीविमोकादृते श्रद्धाया अप्यसिद्धशीलतया देशकालवसतिविहारादीनाम्प्रतिनियतसाधनपटलीसन्निविष्टानां तत्प्रतिष्ठानयोग्यताकत्वात् श्रद्धाविधुराणामेव प्रायशो द्वीपान्तरप्रयाणादिप्रयोगबाहुल्योपलम्भाच्च । तेन हि स्वच्छन्दता तेन नियमातिलङ्घनम् ततश्चात्यन्तिको धर्म्मव्यतिक्रम इति व्यक्ततरो विपरीतपरिणामः । अत एव "शास्त्रातिगः स्मृतो मूर्खो धर्म्मतन्त्रोपरोधना"दिति बौधायनस्मरणमुपपद्यते । "अश्रद्धापरमः पाप्मा श्रद्धा हि परमं तप" इतीदमप्यन्वेत्यत्र विविक्ततया त-

दीयम्। अपिच "अयज्ञेनाविवाहेन वेदस्योत्सादनेन च। कुला-न्यकुलतां यान्ति ब्राह्मणातिक्रमेण च। गोभिरश्वैश्च यानैश्च कृ-ष्या राजोपसेवया। कुलान्यकुलतां यान्ति यानि हीनानि म-न्त्रतः। मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि। कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः" इत्युन्मार्गगामिनाममार्गगामिनाञ्चो-दाहृतस्वरूपाणां स्वरसवाहिविपर्य्ययव्यवहारधारामुपलक्षयन्ति विशिष्टस्मरणानि महर्षेरवबोद्धव्यानि। नच मन्वत्रिविष्णुहारीते-त्यादिस्मरणात्परिगणितस्मर्तृणामन्यतमवत्ता न गम्यते बौधायन-स्येति भ्रमितव्यम्। भगवतस्तस्य कल्पसूत्रकृतो वेदार्थरहस्यपा-रावारपारदृश्वनः स्मृतिकारेभ्योऽन्यूनसत्ताकत्वात्। तन्निरूपिता-र्थप्रामाण्यप्रत्यासत्त्या च तद्गोचराप्रामाण्यशङ्काकलङ्कानवकाशात्। अथैवं यथोपपादितविषयावल्याः पर्य्यालोचनया सागरयानद्वी-पान्तराभिगमनलक्षणविलक्षणक्रियाव्यासङ्गवतामापाततो दूषण-प्रसञ्जनभाषायाः सोपपत्तिकत्वेऽपि तदंशे परिनिष्ठितप्रमाणवाणी-माकाङ्क्षामहे यया वयं व्यपेतसन्देहाः प्रायश्चित्तञ्चरेमहि। अत्रा-चक्ष्महे। यद्यप्यमुष्मिन्नर्थे स्मृतीनामुदाहृतानाङ्कण्टाघोषस्तथापि सद्यः संधानाय पुनः प्रत्याययिष्यामः स्मृतिरश्मिविभेदम्। त-थाहि "पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः १ यानि दक्षि-णतस्तानि व्याख्यास्यामः २ यथैतदनुपेतेन सहभोजनं स्त्रिया सह भोजनं पर्य्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ३ अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधी-यकम् समुद्रसंयानमिति" ४ "अथ पतनीयानि १ समुद्रसंया-नम् २ ब्रह्मस्वन्यासापहरणम् ३ भूम्यनृतम् ४ सर्वपण्यैर्व्यवहर-णम् ५ शूद्रसेवनम् ६ शूद्राऽभिजननम् ७ तदपत्यत्वञ्च ८ एषा-मन्यतमं ९ कृत्वा चतुर्थकालामितभोजिनः स्युरपोऽभ्युपेयुः १० सवनानुकल्पम् स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपघ्न-

न्ति पापमिति । यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः । ११. चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापमिति" इति ह स्माह भगवान्बौधायनः । सुरापानं सीधुपानम् उभयतोदन्तास्तुरङ्गमाः तैर्व्यवहारः जीविकार्थमश्वादीनां क्रयविक्रयलक्षणव्यापारपरिग्रहः "पद्दन्नोमास् हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु" इति पाणिनिसूत्रेण पादादीनां पदादय आदेशाः स्युः शसादौ वा इत्यर्थकेन ददादेशे सति उभयतोदद्भिरिति भिसि रूपमभिजायते । आयुधेन जीवतीत्यायुधीयः "आयुधाच्छ च चाठन्" इति सूत्रेण छप्रत्ययः तस्य ईयादेशे आयुधीय इत्यस्मात्स्वार्थे के आयुधीयकमिति निष्पद्यते शस्त्रोपजीवित्वमिति तदर्थः "या प्रापण"इत्यस्मात्सम्पूर्वात् यात्यनेनेत्यस्मिन्नर्थे "करणाधिकरणयोश्चे"ति ल्युटा संयानमिति रूपमभिजायते समुद्रस्य संयानं समुद्रसंयानम् समुद्रविहारप्रयोजकनौकागमनपर्य्यन्तोऽजहत्स्वार्थलक्षणयार्थोऽवगम्यते । ननूर्णाविक्रयोभयतोदद्व्यवहारायुधीयकैः सार्कं साहचर्य्यमहिम्ना समुद्रसंयानशब्दस्य वृत्त्यर्थं समुद्रे समुपात्तनौकाव्यवहारपरत्वे सत्येव व्यवहारस्य हि तस्य दोषात्मकतया तद्वति ब्राह्मणे पातित्यसम्भवेऽप्यन्यादृशसमीहावतां हेलया तद्गमने कोन्वत्र दोषित्वावगम इति मैवम् समुद्रसंयानस्य केवलस्यैवात्रावगमात् । नहि वृत्त्यर्थमन्यार्थं वा तद्यानं विशेषतो नियम्यते नियामकविशेषाप्रत्ययात् । नचोर्णाविक्रयोभयतोदद्व्यवहारायुधीयकसहपाठात्समुद्रसंयानशब्दस्यापि गमनस्य जीविकानिबन्धनस्यैव गमकत्वमवकल्पत इति भ्रमितव्यम् । एवन्तर्हि सीधुपानशब्दस्यापि पानस्य वृत्त्येकनिबन्धनस्य वाचकतापत्तेर्दुष्परिहरत्वात् तस्याऽपि तैरेव सहपाठात् । न चेष्टापत्तिरिति सन्तोष्टव्यम् । पानस्य परिनिष्पन्नस्वरूपत्वेन वृत्त्यर्थत्वाभावात् असमशीलदोषाणामपि दोषविशेषप्रत्यासत्त्या

सह पाठसम्भवेऽपि स्वरूपप्रत्यासत्त्या तु पार्थक्यस्यैवोपगमाच्च।

ननु पुनः प्रागुपन्यस्तायाः "समुद्रयायी कृतहा रथ्यासमयभेदकः। द्विजस्याब्धौ तु नौयातु"रित्याद्यौशनसादिस्मृतेर्घटकीभूत- "समुद्रयायि"पदोपपन्नस्य "सुप्यजातौ णिनिस्ताच्छील्य" इति पाणिनिस्मरणात्ताच्छील्यनिबन्धनणिनिप्रत्ययस्य प्रतिपत्तौ तस्य हि ताच्छील्यस्य साक्षात्क्रियासमभिहारात्मकत्वे च सातत्येन जीविकार्थमभ्यात्तसमुद्रसंयानानां किल कैवर्त्तकादीनामेवाभिधाता न तु नो विनोदाय सकृद्द्वित्रिवारं वा द्वीपान्तरमाजुषतां ब्राह्मणादीनां सशब्द इति। मैवम् "करणे यज" इत्यापवादकाधिकारादानन्तरात्तदन्तर्वर्त्तियजधातोरुपादानस्य धात्वन्तरोपलक्षकत्वे तत एव प्रकृते णिनिप्रत्ययविधाने सति सूत्रस्यास्याताच्छील्यार्थतया तद्गोचरप्रत्यवस्थानभेदस्याग्रहणार्हत्वात्। नचोपलक्षणविधया विचारमवतार्य्य तत्त्वविनिर्णिनयिषा प्रमाणपथमारोहन्ती समुदाचरेदित्याशङ्कनीयम् तस्या अपि प्रमाणपटलीसमन्तर्हृदयतया समानयोगक्षेमत्वात् नह्यत एव "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा"दित्यस्यामृचि शीर्षाक्षपादशब्दास्त्रयः समष्ट्या व्यष्ट्या वाऽकण्ठोक्तश्रोत्रघ्राणादीन्द्रियाण्युपलक्षयन्तो न तेषामापरोक्ष्येणाभिलापकानाम्पदानां समभिव्याहारमपेक्षन्ते कया चिद्व्यपेक्षया। न वा व्युत्पित्सुजना लघुं परिहायाध्वानमतिवेलकालत्वलाभेऽप्यनुपदव्युत्पादननिरता ह्यापद्यन्ते पाणिन्यादयो महर्षयः। यथाह वार्तिककारः "रक्षोहागमलघ्वसन्देहाः प्रयोजन"मिति। विवृतं चैतत्पतञ्जलिना "लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनावश्यं शब्दा ज्ञेया इति न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुमिति" तदिदं कण्ठत उपलक्षणतो वेति व्यक्तीभवत्येव यथायोगम्। अतो "लघ्वर्थं हि संज्ञाकरण"मित्यप्युपपद्यते वचस्तदीयम्। "ऋषयोपि पदार्थानां नान्तं यान्ति पृथक् ततः। लक्षणे न तु

सिद्धानामन्तं यान्ति पृथक् त्वश''इति च स्मर्य्यतेऽतितराम्। नच तावता प्रकृतमसम्बद्धमिति वाच्यम्। तदादि दृढप्रतिपत्तय एव तत्प्रवृत्त्युपपत्तेस्तदिदमाकलनीयं प्रकृतमेवेति। नन्वस्तु तावदौपलक्षण्यमन्यत्र किमिह तावता समुद्रयायिपदे ताच्छील्यार्थप्रसक्तिसामञ्जस्यमिति। अत्राचक्ष्यते ''सुप्यजातौ णिनिस्ताच्छील्य''इत्यधिकारान्तराद्यद्यपि जातिपदभिन्नपद एव गम्यमानणिनिप्रत्ययस्य ताच्छील्यार्थता निरूढा तथा सत्यपि क्षीरादिभेदभिन्नव्यक्तिवाचिनः समुद्रशब्दस्य जातिशब्दत्वे तदभिन्नोपपदसमभिव्याहृतपदप्रकृतिभूत''या'' धातूत्तर''णिनि''प्रत्ययाप्राप्तौ ताच्छील्यासम्भवात्। एतदेवाभिप्रेत्य ''साधुकारिण्युपसङ्ख्यानं ब्रह्मणि वदः अताच्छील्यार्थे वार्तिकद्वयं साधुकारो ब्रह्मवादी''त्यताच्छील्यार्थपर्य्यवसायि वार्त्तिकोन्नीतोदाहरणद्वयमुदित''यायि'' पदस्वरूपोद्धलकमुपपन्नं भवति तदेतच्च यथोक्तदिशा ह्युपलक्षणमर्य्यादां नातिशेते ''राजा सर्वस्येष्टे ब्राह्मण्यवर्ज्जं साधुकारी स्यात्साधुवादी त्रय्यामान्वीक्षिक्यां चाभिविनीत''इति गौतमस्मृतिघटकसाधुकारिसाधुवादिपदे तथाविधे वेदितव्ये। एवमेवाताच्छील्यार्थपर्य्यवसायिन आत्मघात्यग्निष्टोमयाजी सोमयाजी पितृव्यघाती ब्रह्मघातीत्येवमादिकाः शब्दा उदाहार्य्याः। एवञ्च सकृदसकृद्वेत्यादिविकल्पास्पदीभूतशङ्काऽनवकाशे वृत्त्यर्थमन्यार्थं वा गमनं केन तुभ्यमभ्यधायि। तथाच तदेतदप्रामाणिकमनर्थफलकञ्चेत्यवधारितमवधारयिष्यते च। इत्थञ्चानन्यनिष्ठसंयानसामान्यस्य निर्वृत्तस्वरूपस्य पातित्यापादकत्वस्य दुराधर्षणीयत्वे वृत्त्यर्थमभिप्रसञ्जितस्य तस्य परपातित्यप्रसञ्जकतायां पाटवातिशयसमायोगः कैमुतिकन्यायायत्तश्च निराबाधोऽवधार्य्यते। तदिदमुक्तं भवति हेलया तद्गमनप्रसक्तावपि तन्निमित्तपातित्यावलेपनमनपह्नवार्हमिति। न चोर्णाविक्रयपुरोगमानां

सदा सर्वत्र प्रचारचराणाम्पातित्यप्रयुक्तनिष्कृतिसमाचारानुभूत्यभावे किमिति तत्समुदायैकतमसमुद्रसंयानस्यैव प्रायश्चित्तार्हतोपपद्यत इति शक्यन्नियोक्तुम् । व्यापारेषूर्णाविक्रयादिषु स्वस्वसन्नियतदूषणाधानसमर्थनस्य समुचितत्त्वेऽपि समुद्रसंयाने नूनमेभ्यो निग्रहार्हभूयो दूषणगोचरतापरञ्ज्ञञ्ज्ञन्यते । जोहोर्ति च तदास्पदीभूतविक्रियावैजात्यम् । मोमोर्ति च निर्मृष्टाशेषस्वस्त्ययनप्रत्यनीकभूतप्रयोगराजिः । दोधूयन्ते च ध्वजान्ताः सदध्वविजयस्तम्भमौलीनाममन्दमिति परिष्करोतु मतिमत्तामुदासीनोऽपि । ऊर्णादिव्यवहारकोटिनिविष्टत्वेऽपि सीधुपानसमुद्रसंयानयोरन्यादृशस्वरूपमवसेयम् । तत्रापि तारतम्यविचारणायामुभयोः समसत्ताकत्वमेव फलतः सम्प्रधार्य्यते । न चोर्णादिवत्तन्निरूपितवैलक्षण्यमाज्ञस्येनैव समुद्रसंयानेऽपि किन्न स्यादिति वाच्यम् तद्याने प्रवृत्तम्प्रति सीधुपानकर्म्मणोऽत्यासन्नाभ्यवहारक्रियासमस्वभावत्वात् । नहि तत्र प्रवृत्ताः सीधुपानान्निवृत्ता उपलभ्यन्ते यत्नेनान्विच्छद्भिर्वा कुहस्वित् प्रत्युत तदादि प्रणिहितात्मान एवानवरतमेवंविधा आधीयन्ते । नहि तदाद्युदासीना यदा कदापि याने प्रवृत्तिं प्रामाणिकीं विजानीयुः । नह्यन्याय्यतयाऽनिष्टनिदानतया चावसितां तां कटाक्षेणापि वीक्षते कदाचिद्वा । नहि विषं विशेषेणात्मघातुकमाजानन्नशनायाया उपशमाय तत्र प्रवर्त्तयेत्प्रवर्त्तमानस्तदेतदापीय पिपासां वोपशमयेत् ।

ननु "ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धगस्तेन नास्तिकनिन्दितकर्म्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्निति" गौतमस्मरणान्महापातकेष्वेतेषु समुद्रसंयानस्यापाठेऽकस्मान्मसीसम्पातायातः समुद्रसंयानशब्दः कथम्महापातककोटिकतया स्वार्थमभिदध्यात् । नैष दोषः ब्रह्महननसुरापानादीनाम्प्रत्येकम्महापातकतया निर्ज्ञातानां

द्वित्राणां काममत्र समष्टेः समुद्रसंयानकर्म्मण्याप्रोतत्वे फलतः समुद्रसंयानकर्म्मणो महापातकतरताऽभ्युपगमे प्रत्यवायाभावात् । ईदृङ्निरूढदोषास्पदतयैव समुद्रसंयानपदस्य सीधुपानसहपठनस्य समुचिततरत्वान्न सर्वज्ञकल्पानाम्परमर्षीणां रचनाविशेषकर्म्मणि मसीसम्पातायातगोचरकल्पना हि निजार्भकपयःपानवेलासमुन्नीतनिमीलितनेत्रस्याखुभुजो जगन्मात्रनिमीलनावस्था प्रतिभासवृत्तान्तमनुहरति । न ह्याजानसिद्धानां प्राग्भवीयवेदार्थानुष्ठानलब्धजन्मनिर्भ्रान्तप्रज्ञानां सामर्थ्यमस्मदीयेन प्रमादभूयिष्ठेन सामर्थ्येनोपमातुं शक्यते यतो न मसीसम्पातादिवितर्कविशेषः क्षणमप्यवतिष्ठेत । नहि समुद्रसंयानशब्दो मुख्यया किल वृत्त्या मृदुतरार्थविशेषमेवाभिदधन्नोपसर्जनप्रत्यासत्त्या वा यथोक्तदोषाधिक्यव्यासङ्गवाहो नाभिप्रेयते विरूपविधानाय कथञ्चित् तत्पदार्थप्रथमोपस्थितेरनन्यशेषत्वप्रतिपत्तियोग्यताकलेऽपि समनन्तरोपस्थितिगोचरप्रत्ययबाहुल्यमहिम्ना यथोपपादितदोषाणां शेषभावमापन्नानां शेषित्वेनोक्तापत्तेरनवकाशात् । नच सह पठितयोर्ब्रह्मस्वन्यासापहरणभूम्यनृतयोस्तत्प्रभवयोश्च पाप्मनोः प्रसक्तमानुषाणां दोषित्वेन सुव्यक्तमनुभूयमानानां प्रायशोऽकृतप्रायश्चित्तत्वेऽसंव्यवहार्य्यत्वाभाववत्त्वे च समुद्रसंयानप्रसक्तानामेव किमिति निगृह्य प्रायश्चित्तार्हताऽसंव्यवहार्य्यतयोरादरातिशय इति वाच्यम् । ब्रह्मस्वन्यासापहरणभूम्यनृतयोरविप्रतिपन्नदोषभावत्वे तत्प्रसक्तलोकानां सम्प्रतिपन्नदोषवत्त्वे च तन्निर्म्मोचनोपायानुष्ठानप्रयत्नाभावस्यात्यन्तिकनास्तिक्यनिबन्धनत्वेन सकलसन्मार्गबहिर्विषयविषयत्वेन च दण्डार्हत्वात् । सर्वपण्यव्यवहरणशूद्रसेवनयोरारूढपामर्य्यकार्पण्यकार्य्यभूतयोः शूद्राऽभिजननतदपत्यभावयोश्चानवच्छिन्नमहामोहमूलीभूतयोः परपातित्यनिमित्तयोरपि संसर्गिवर्गीणपरिषदुपेक्षालक्षणपरापराधप्रयुक्तब्राह्मण्यमहाहानिरा-

नुभविकी तेषां वा यथायोगं व्यवहारपदत्वे पक्षप्रतिपक्षाभ्यां विमृश्य राजशासनभागितया तस्यापि शासनस्य "दण्डवत्प्रायश्चित्तानि भवन्ती"ति नियमात्प्रायश्चित्तप्रतिनिधितया च फलतः समतावगमात् । असंव्यवहार्य्यताप्रतीतिरपि दोषगौरवनिबन्धनाऽसति सतामनुमोदने कथमन्यथयितुं प्रभवेयुरन्यादृशाः ।

तथाविधानामेव भूयस्त्वेन नो निर्बन्ध इत्याद्याः कल्पनाः पुरस्तान्निरस्ता एवेति तदेतन्न प्रसर्त्तव्यं मनागपि । तथा च बौधायनस्मरणमयूखमालानामप्रत्यवायतमस्तोमापहत्री निरातङ्कैकङ्कर्य्याधिकरणा ज्ञातव्या । इत्थञ्च समुद्रसंयानादि जन्मनः पातित्यलक्षणबन्धनाद्ब्राह्मणादेर्मुमोचयिषया प्रवृत्तां मातापितृशतेभ्योऽपि वत्सलतरां भगवतीं श्रुतिश्चतुर्थकालेत्याद्यामुदाजहार परमकारुणिको मुनिग्रामणीः । पतनीयानाममीषां समुद्रसंयानोपक्रमतदपत्यपर्य्यन्तानां सप्तानामितरेतरस्वरूपवैधर्म्म्यसौक्ष्म्यातिशयसम्भवेऽपि पतनीयताप्रयोजकधर्म्मविशेषस्य सप्तस्वनुगततया तत्पुरस्कारेणैकमुख्यमेव प्रायश्चित्तस्य प्रख्याप्यते सूक्ष्मेक्षिकयैतया ऋचा । अत्र शूद्रशब्दो न केवलं चतुर्थवर्णत्वावच्छिन्नस्य वाची अपितु निगमागममर्य्यादासामान्यानधिकृतस्य मानवमात्रस्य लक्षयिता तुरीयवर्णवर्गीणास्तूच्यंते केवलं न तु लक्ष्यन्ते । लक्ष्यन्ते हि तज्जातीयेभ्यो भिन्नाजघन्यतराचारशीलाः क्षोणीतलमात्रमीयमाना निरवशेषा एव मानुषाः "पद्भ्यां शूद्रोऽजायते"ति श्रुतिस्तुरीयजातीयमेवापरोक्षमुद्रयाऽभिधत्ते । "असतो वा एष सम्भूतो यच्छूद्र" इति तु श्रुतिर्य्यथोदीरितलक्ष्यार्थप्रधानाऽवधार्य्यत इति तयोर्विवेकः तथा चोभयविधशूद्रसेवनादेर्दीर्घकालनैरन्तर्य्यसम्पादितस्यैव त्र्यब्दप्रायश्चित्तार्हता न त्वल्पैरहोभिराचरितस्य एवञ्चैककोटिनिविष्टतया समुद्रसंयानप्रभवपातकापहारं प्रत्यप्यसत्यदीर्घकालिकसमाचारे त्र्यब्दप्रायश्चित्तपरिमाप्तिर-

परिहार्य्या । समुद्रसंयानोपलक्षितद्वीपान्तरप्रयाणजन्मानं प्रति पातित्यापादकदोषविशेषमेतदेव हि प्रायश्चित्तमर्थसिद्धम् । न चैनदार्थमेव प्रायश्चित्तं ते तावतेति मन्तव्यम् स्मरणे सत्यमुषिभिन्नत्यासन्ने तदसम्भवात् । न च पुन"रापत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽऽसमाप्तेर्ब्राह्मणो गुरुर्य्याजनाध्यापनप्रतिग्रहाः सर्वेषां पूर्वः पूर्वो गुरुस्तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिस्तस्या पण्यं गन्धरसकृतान्नतिलशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी क्षीरञ्च सविकारं मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि पशवश्च हिंसासंयोगे पुरुषवशा कुमारीहेतवश्च नित्यं भूमिव्रीहियवा याव्यश्च ऋषभधेन्वनुडुहश्चैके । विनिमयस्तु रसानां रसैः पशूनाञ्च न लवणाकृतान्नयोस्तिलानाञ्च समेनासमेन तु पक्कस्य सम्प्रत्यर्थे सर्वधातुवृत्तिरशक्तावशूद्रेण तदप्येके प्राणसंशये तद्वर्णसङ्करोऽभक्ष्यनियमस्तु प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत राजन्यो वैश्यकर्म्मवैश्यकर्म्मे"ति गौतमस्मृतिसमुच्चय आपदि सत्यां ब्राह्मणादेरुत्तरोत्तरवर्णजीविकापरिग्रहमनुग्राहयन्नापत्तरप्रसक्तौ तु शूद्रातिशूद्रसेवनादिप्रत्याख्यानगोचरोत्प्रेक्षाविशेषाणामनभिप्रेतप्रायतयाऽऽपत्तरविशेषसमुपस्थाने समुद्रसंयानद्वीपान्तरप्रयाणयोरपि तत्तुल्यप्रत्यासत्त्याऽनुज्ञानयोग्यताकतया विहितार्थसमोऽयमर्थो नोपन्यस्तप्रायश्चित्तप्रक्रियाऽऽधायक इति विवदितव्यम् । प्रत्यवस्थानानां खलु केवलनामकार्य्यक्षमत्वात् । नह्यापदि निरूपितोऽर्थो विक्रमप्रक्रियामाधातुमीष्टे "यावद्वचनं हि वाचनिकमि"ति न्यायात् । यद्यापत्तरमुद्दिश्येयत्ता चेदतिलङ्घेत । ततस्ततोऽप्यापत्तरमापत्तरञ्चेत्यापदामानन्त्यादनवस्थापातेऽनियमपर्य्यवसानमेव फलतः प्रतीयादिति नियमकारिशास्त्रमप्रयोजकमनवस्थितचरञ्च प्रसज्येत । आपत्कल्पोऽपि बुद्धिपौरुषहीनानेवालन्तोषयितुं न तु विपर्य्ययान् ।

नह्याक्रन्दननिमित्ते पर्य्युपस्थित आक्रन्दनक्रियागोचर उपदेशो महिमानमर्हत्युपदेष्टुः उपदेष्टा वा नहि तादृग्भिरुपदेशैरात्मानमाकलयते कुक्षिम्भरिं कृतमतिः। आपत्कल्पो ऽप्याप्तोपदेशो धर्म्माव्यतिक्रमायैवावकल्पते न तु व्यतिक्रमार्थम्। नानर्थे उपदेशः क्वचिदपि श्लाघापदम्। अश्रद्धात्मनः प्रतिमत्युत ततो मर्कटस्य मदिरापानमिति न्यायोऽनुगम्यते। नहि साधनवैकल्यप्रयुक्ताऽऽपत्तिः स्वव्याख्या स्वानुकूलोपपत्तिभ्यामर्थवत्तामापद्यते। किन्तु स्वापहारकसामग्रीसङ्घटनाऽनुकूलपौरुषातिशयप्रयोगादेव स्वयश्चोपदेश्य उभावप्यश्नुवीयातां कृतकृत्यताम्। धीरास्तु सम्पत्समयविवक्षया विपत्समय एव धर्म्माचरणबद्धदीक्षालोकतः शाश्वतश्चानुभूयन्ते यद्बलादेव ते पुनः पूर्वतरां सम्पदमापेदिरे। यथाच पाण्डवादयो महाभागा अन्येऽप्यसङ्ख्याका एवार्त्तवर्गीया ह्यद्यावधि। एतेनापत्कालीनधर्म्माचरणसङ्कोचगोचरप्रवादा अधार्म्मिकप्रवृत्तिपरिसङ्ख्यानयोगयोग्या इत्युक्तं भवति। तथाच सागरसंयानद्वीपान्तरपर्य्यटनयोर्म्मधुमांसाशनादि प्रवृत्त्यन्यावृत्तयोस्त्र्यब्दप्रायश्चित्तविधानमत्यादरगोचरमुन्नीयते। तदेतत्पुनःसंस्कारसहकृतमेवा"रट्टान् कारस्करान् पुण्ड्रान् शाकान् प्रानूनानिति च गत्वा पुनःसंस्कारमर्हति पुनस्तोमेन यजेत पुनः सर्वपृष्ठया वा" इति बौधायनस्मरणेनाधिगम्यते। पुनरुपनयनं पुनःसंस्कारः परमत्र"वपनं मेखला दण्डो भैक्ष्यचर्य्या व्रतानि च। निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणीति वसिष्ठस्मरणादेतावान्वै भेदोऽधिगम्यते। नहि पुनःसंस्कारादृते त्र्यब्दप्रायश्चित्तप्रक्रिया"पापापनुत्तये यथावत् क्षमते। यतः प्रायश्चित्तं प्रयुञ्जानैर्वैगुण्याप्रसक्तये साद्गुण्यसम्पत्तये च पुनःसंस्कारसमुच्चिचीषावद्भिस्तत्सिद्धिसंवलितैश्च भवितव्यम्। यथाह तु"येद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुराम्पुनः। पुनः संस्कारकरणाच्छु-

द्ध्येदाह पराशरः १ अज्ञानात्तु सुराम्पीत्वा रेतो विण्मूत्रमेव वा । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः । चान्द्रायणञ्चरेत्सर्वानवकृष्टान्निहत्य तु । शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध्यती''ति याज्ञवल्क्यपराशरौ । न च रेतःपुरोगमादीनां निदानमिदमप्रयोजकं प्रकृत इति मन्तव्यम् प्रथमोद्दिष्टमद्यपाने निर्व्यग्रमभिप्रेतत्वादितरेष्वपि वाचिकविधया निगम्यमानत्वाच्च । असत्यवश्यम्भाविकार्य्योपरोधे सति च कायिकसामर्थ्ये चतुर्थकालेत्यादिश्रुत्युन्नीतसाधनानुष्ठानमेव श्रेयः साधनायालं नान्यथा । प्रमादालस्यादिकृता यथोक्तानुष्ठानोपरतिरन्याय्येति न तद्वतां चेतःप्रसादाय प्रकारान्तरानुसरणं प्रामाणिकम् । उक्तानुपपत्तियाथात्म्ये त्रिभिर्वर्षैस्तदपघ्नन्ति पापमिति श्रुतिघटकपदेभ्यः त्रिसांवत्सरिकप्रायश्चित्तानुष्ठानप्रतिनिधितया कृच्छ्रचान्द्रायणाद्यनुगृहीतं भवति । स्मर्य्यते च ''पद्मोदुम्बराबिल्वैश्च कुशाश्वत्थपलाशयोः । एतेषामुदकम्पीत्वा पर्णकृच्छ्रं तदुच्यते १ पञ्चगव्यञ्च गोक्षीरदधिमूत्रशकृद्घृतम् । जग्ध्वा परेऽह्न्युपवसेदेष सान्तपनो विधिः २ पृथक् सांतपनैर्द्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं स्मृतम् ३ त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुंक्ते त्वयाचितम् । त्र्यहं परञ्च नाश्नीयात्प्राजापत्यो विधिः स्मृतः । सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः । अयाचिते चतुर्विंशः परेऽह्न्यनशनं स्मृतम् । कुक्कुटाण्डप्रमाणं स्याद्यावद्यस्य मुखं विशेत् । एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ४ त्र्यहमुष्णम्पिबेदापस्त्र्यहमुष्णं पिबेत्पयः । त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् । षट्पलानि पिबेदापस्त्रिपलन्तु पयः पिबेत् । पलमेकन्तु वै सर्पिस्तप्तकृच्छ्रं विधीयते ५ दध्ना च त्रिदिनं भुङ्क्ते त्र्यहं भुङ्क्ते च सर्पिषा । क्षीरेण त्रिदिनं भुङ्क्ते वायुभक्षो दिनत्रयम् त्रिपलं दधिक्षीरेण पलमेकन्तु सर्पिषा । एतदेव व्रतम्पुण्यं वैदिकं

कृच्छ्रमुच्यते ६ एकभुक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ७ कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्। द्वादशाहोपवासेन पराकः परिकीर्त्तितः ८ पिण्याकदधिसक्तूनां ग्रासश्च प्रतिवासरम्। एकैकमुपवासः स्यात्सौम्यकृच्छ्रः प्रकीर्त्तितः ९ एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्। तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः १० कपिलागोस्तु दुग्धाया धारोष्णं यत्पयः पिबेत्। एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत्११”दित्यत्र भगवताऽत्रिणा। प्रयोगपुरःसरं पुनर्भगवता गौतमेन स्मर्य्यते। तथाहि “अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरम्। त्र्यहं नक्तम्भुञ्जीत अथापरं त्र्यहं न कञ्चन याचेदथापरम्। त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्य्यैर्न सम्भाषेत रौरवं यौधाजने नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्रवतीभिर्वा यजेत हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिः। अथोदकतर्पणम् ॐनमो हमाय मोहमाय संहमाय धुन्वते तापसाय पुनर्वसवे नमो नमो मौञ्ज्यायोर्म्म्यार्य वसुविन्दाय सर्व्वविन्दाय नमो नमः। पाराय सुपाराय महापाराय पारयिष्णवे नमो नमो रुद्राय पशुपतये महते देवाय त्र्यंबकायैकचराधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमोनमः सूर्य्यायादित्याय नमोनमो नीलग्रीवाय शितिकण्ठाय नमोनमः। कृष्णाय पिङ्गलाय नमोनमो ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्ध्वरेतसे नमोनमः। सत्याय पावकाय पावकवर्णाय कामाय कामरूपिणे नमोनमो दीप्ताय दीप्तरूपिणे नमोनमस्तीक्ष्णरूपिणे नमोनमः सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमोनमश्चन्द्रललाटाय कृत्तिवाससे पिनाकहस्ताय नमोनमः इति। एतदेवादित्योपस्थान-

मेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाऽग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्योदेवेभ्यो ब्रह्मणे प्रजापतये अग्नये स्विष्टकृत इति। ततो ब्राह्मणतर्पणम्। एतेनैवातिकृच्छ्रो व्याख्यातो यावत्सकृदाददीत तावदश्नीयादब्भक्षस्तृतीयः सकृच्छ्रातिकृच्छ्रः प्रथमञ्चरित्वा शुचिः पूतः कर्म्मण्यो भवति। द्वितीयञ्चरित्वा यत्किञ्चिदन्यन्महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते। तृतीयञ्चरित्वा सर्वस्मादेनसो मुच्यते अथैतांस्त्रीन् कृच्छ्रांश्चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवति यश्चैवं वेदे"ति। चान्द्रायणञ्च "एकैकं वर्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत्। अमायाञ्च न भुञ्जीत एष चान्द्रायणो विधि"रिति। तदिदं सप्रयोगं महर्षिणा बौधायनेन स्मर्य्यते। तथाहि "अथातश्चान्द्रायणस्य कल्पं व्याख्यास्यामः। शुक्लचतुर्दशीमुपवसेत् केशश्मश्रुलोमनखानि वापयित्वाऽपि वा श्मश्रूण्येवाहतं वाससो वसानः सत्यं ब्रूयान्नावसथमभ्युपेयात् तस्मिन्नस्य सकृत्प्रणीतोऽग्निररण्यो निर्म्मन्थो वा ब्रह्मचारी सुहृत्भैषायोपकल्पी स्यात् हविष्यञ्च व्रतोपायनीयं अग्निमुपसमाधाय सम्परिस्तीर्य्याग्निमुखात्कृत्वा पक्वान् जुहोति अग्नये या तिथिः स्यान्नक्षत्राय सदैवताय। अत्राह गोरमन्वतेति। चान्द्रमसीं पञ्चमीं द्यावापृथिवीभ्यां षष्ठीमहोरात्राभ्यां सप्तमीं रौद्रीमष्टमीं सौरीं नवमीं वारुणीं दशमीमैन्द्रीमेकादशीं वैश्वदेवीं द्वादशीमिति। अथापराः समामनन्ति दिग्भ्यश्च सदैवताभ्य उरोरन्तरिक्षाय सदैवताय। नवोनवो भवति जायमान इति सौविष्टकृतिं हुत्वाऽथैतद्धविरुच्छिष्टं कंसे वा चमसे वा व्युद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्य पञ्चदश पिण्डान् प्रकृतिस्थान् प्राश्नाति प्राणायत्वेति प्रथमम् अपानायत्वेति द्वितीयम् व्यानायत्वेति तृतीयम् उदानायत्वेति चतुर्थम् समानायत्वेति पञ्चमम्। यद्वा

चत्वारो द्वाभ्यां पूर्वं यदा त्रयो द्वाभ्यां द्वाभ्यां पूर्वो यदा द्वौ द्वाभ्यां पूर्वं त्रिभिरुत्तरमेकं सर्वैः निग्राभ्यास्थेति अपः पीत्वा खाद्यस्य जुहोति प्राणापानवाङ्मनःशिरःपाणित्वक्चर्म्मशब्दः पृथिवी । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहेति सप्तभिरनुवाकैः जयप्रभृतिसिद्धमाधेनुवरप्रदानात् सौरीभिरादित्यमुपतिष्ठते चान्द्रमसीभिश्चन्द्रमसम् अग्ने त्वं सुजाग्रहीति संविशन् जपति त्वमग्ने व्रतपा असीति प्रबुद्धः स्त्रीशूद्रैर्नाभिभाषेत मूत्रपुरीषे नावेक्षेत अमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रञ्चक्षुः सूर्य्यो ज्योतिषां श्रेष्ठोदीक्षे मामाहासीरिति प्रथमायामपरपक्षस्य चतुर्दश ग्रासान् एवमेकापचयेनामावास्यायां ग्रासो न विद्यते प्रथमायां पूर्वपक्षस्यैको द्वौ द्वितीयस्यां एवमेकापचयेनापौर्णमास्याः पौर्णमास्यां स्थालीपाकस्य जुहोत्यग्नये या तिथिः स्यान्नक्षत्रेभ्यश्च सदैवतेभ्यः पुरस्ताच्छ्रोणाया अभिजितः सदैव तस्य हुत्वा गां ब्राह्मणेभ्यो दद्यात् तदेतच्चांद्रायणं पिपीलिकामध्यं विपरीतं यवमध्यं अतोऽन्यतरं चरित्वा सर्वेभ्यः पातकेभ्यः पापकृच्छुद्धो भवति कामायकामायैतदाहार्य्यमित्याचक्षते यं कामं कामयते तमेतेन प्राप्नोति एतेन वा ऋषय आत्मानं शोधयित्वा पुराकर्म्माण्यसाधयंस्तदेतद्धन्यं पुण्यं पुत्र्यं पौत्र्यं पशव्यमायुष्यं स्वर्ग्यं यशस्यं सार्वकामिकं नक्षत्राणां सूर्य्याचन्द्रमसोरेव सायुज्यं सलोकतामाप्नोति य उ चैनदधीते य उ चैनदधीत" इति एतेषामेकादशधा परिगणितानां कृच्छ्राणामधुनातनमानववपुःपाटवादिपर्य्यालोचनया एकस्याप्यव्यग्रमनुष्ठानं प्रभवेदर्थयितुं न वेति संदिहानाः प्रत्यब्दं त्रिंशत्प्राजापत्यानि चान्द्रायणानि च त्रीणि सन्ति त्रिभिर्वर्षैः सङ्कलनया नवतिः प्राजापत्यानां नवकं चान्द्रायणानां संख्यामत्यासन्नामप्युपशमय्य तेषामप्यनुकल्पानेव साभिप्रायाननुजानी-

महे । तथाहि "प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् । धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः । धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्तिते" ति स्मर्य्यते । एतदुक्तं भवति । चतुर्थकालेत्यादिश्रुत्युक्तत्रैवार्षिकव्रतम् यद्वा नवतिः प्राजापत्यानि तदनुष्ठानाशक्तौ नवतिदोग्ध्रिधेनुदानं तत्राप्यशक्तौ तन्मूल्यभूतसार्धद्वादशोत्तरशतरौप्यमुद्रादानमिति त्रयः पक्षाः समुदिता भवन्ति। यद्यप्येतदर्थे यथोपन्यस्तप्राजापत्यानामेव प्रायश्चित्तश्रुत्यर्थस्वारस्यमहिम्नाऽवश्यानुष्ठेयता तावदविप्रतिपन्नप्रमाणभावमर्हति तथापि सुरापानमांसाशनादीनां महापातकानामेतत्प्रायश्चित्तीयमानवयोग्यतापर्य्यालोचनया प्रसक्तिमभिसन्धाय "मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च । कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा । पवित्राणि जपेत्पिण्डान् गायत्र्या चाभिमन्त्रयेत् । धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् । कृच्छ्रकृद्धर्म्मकामस्तु महतीं श्रियमाप्नुयात् । अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु" इत्यादि याज्ञवल्क्याद्यनुशासनविशेषेभ्यश्चान्द्रायणादेरपि प्राप्तिः प्रामाणिकी पुण्यातिशयनिष्पादिनी च सम्पद्यते । नहि प्रमाणप्रतीतोऽर्थो मनागप्युपेक्षामर्हति कर्म्मणि वैगुण्यापत्तेर्दुरुद्धरत्वात् । तथाच प्राजापत्यवत्तिसृभिः समाभिः नवकं चान्द्रायणानामुद्गृहीतम्भवति । तत्राप्यनुष्ठानाशक्तौ तत्प्रत्याम्नायभूतगोदानानि प्रतिचान्द्रायणं हि सार्धसप्त ७॥= संख्याकान्यवक्लृप्तानि सन्ति । सङ्कलनया नवसंख्याकानाञ्च तेषां सार्धसप्तषष्टि ६७॥ संख्यान्यभिजायन्ते गोदानानि । तत्रापि पुनरसामर्थ्ये तन्मूल्यभूतषडाणकोत्तरचतुरशीति ८४।= रौप्यमुद्रिकाप्रदानं विधीयते प्रकृतप्रायश्चित्तपरिशिष्टनिष्क्रयणानां विचारणया "प्राणायामैः पवित्रैश्च दानैर्होमैर्जपैस्तथा । शुद्धिकामाः प्रमुच्यन्ते पातकेभ्यो

न संशयः। प्राणायामान पवित्रांश्च व्याहृतीः प्रणवं तथा। पवित्रपाणिरासीनोऽध्यभ्यस्य ब्रह्म नैतिकम्। आवर्त्तयेत्सदा युक्तः प्राणायामान् पुनःपुनः। आकेशाग्रादानखान्तात्तपस्तप्यत उत्तमम्। निरोधाज्जायते वायुर्वायोरग्निर्हि जायते। तापेनापो हि जायंते ततोऽन्तः शुध्यते त्रिभिः। तथा चर्म्म तथानङ्गा दोषा अभ्यर्तिधर्म्मतः। तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात्। प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम्। प्रत्याहारेण विषयान् ध्यानेनानैश्वरान् गुणान्। नच तीव्रेण तपसा न स्वाध्यायैर्न्न चेच्छया। गतिं गन्तुं सुराः शक्ता योगात्संप्राप्नुवन्ति याम्। योगात्सम्प्राप्यते ज्ञानं योगो धर्म्मस्य लक्षणम्। योगः परन्तपो नित्यं तस्माद्युक्तः सदा भवेत्। एकाक्षरम्परं ब्रह्म प्राणायामः परन्तपः। ब्रह्माणी चैव गायत्री पावनं परमं स्मृतम्। सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यत" इत्याद्याभिः स्मृतिभिर्दोषारण्यप्रदाहाय प्राणायामतनूनपात् प्रभुर्भवति। एवञ्च सहस्रं प्राणायामाः कर्त्तव्यतया विधीयन्ते "प्राणायामसहस्रं हि पातकानां विशोधक" मिति योगियाज्ञवल्क्यस्मरणात्। नच "प्राणायामशतं कार्य्यं सर्वपापापनुत्तये। उपपातकजातानामनादिष्टस्य चैव ही"ति याज्ञवल्क्यस्मृतिः शतमेव प्राणायामान् बोधयन्ती बाध्येतेति वदितव्यम्। उपपातकजातनिर्हरणपरतया तन्निष्ठार्थवत्तायाः कण्ठोक्तत्वेऽपि प्रकृतप्रायश्चित्तीयजनाचरितसीधुपानादिमहापातकापनुत्तये सहस्रस्य समाश्रयणीयत्वात् लक्षगायत्रीजपो विधीयते। यथोक्तं मनुना "लक्षं जप्ता तु सा देवी महापातकनाशिनी" ति। नच "सर्वेषामेव पापानां सङ्करे समुपस्थिते। दशसाहस्रमभ्यस्ता गायत्री शोधनी परे" त्यत्रिस्मरणमेवंसति बाध्येतेत्याशङ्कनीयम्। तस्य ह्यनुपातकसार्थनिर्ह-

रणपरतयाऽर्थवत्त्वात् । तद्दशांश १०००० गायत्र्या साज्ययवतिलहोमः तद्दशांश १००० भूतया तया तर्पणम् तद्दशांश १०० भूतया तया मार्जनम् तद्दशांशब्राम्हणसन्तर्पणम् परमेतद्यथाविभवमूहनीयमिति दिक्। यथोक्तम् "जपस्य तु दशांशेन होमं कुर्य्याद्यथाविधि । होमार्थन्तद्द्विगुणं जपेन्मंत्रं समाहितः । होमस्य तु दशांशेन तर्पणं समुपाचरेत् । तर्पणस्य दशांशेन मार्जनं समुदाहृतम् । मार्जनस्य दशांशेन ब्राह्मणान् भोजयेत्तत" इति स्मृतिकारैः सीधुपानादिप्रसक्तौ तु ध्रुवायाममीषां "सुरापः स्वर्णहारी तु रुद्रजापी जले स्थितः। सहस्रशीर्षाजापी च मुच्यते सर्वकिल्बिषैः । शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः । सर्वपापहरा ह्येते रुद्रैकादशनी तथा । यत्रयत्र च सङ्कीर्णमात्मानं मन्यते द्विजः। तत्रतत्र तिलैर्होमो गायत्र्या वाऽर्चनन्तथे" ति स्मृतिभ्यो योगीश्वरस्य शतरुद्रीयपारायणं तदेकादशन्योरनुष्ठानमभ्युक्तं भवति "स्तेयं कृत्वा गुरुदारांश्च गत्वा मद्यं पीत्वा ब्रह्महत्याञ्च कृत्वा। भस्माच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः। भस्मदिग्धशरीरस्तु भस्मशायी जितेन्द्रियः। सततं रुद्रजाप्योऽसौ परां सिद्धिमवाप्स्यति। रोगवान् पापवाँश्चैव रुद्रं जप्त्वा जितेन्द्रियः। रोगात्पापाद्विनिर्मुक्तो ह्यतुलं सुखमश्नुत" इत्याह स्म शातातपः "रहसि कृतानां महापातकानामपि शतरुद्रीयं प्रायश्चित्त" मिति शंखः "यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स्वर्णस्तेयात्पूतो भवति सुरापानात्पूतो भवति ब्रह्महत्यात्पूतो भवति कृत्याकृत्यात्पूतो भवतीति" "एकादशगुणान्वापि रुद्रानावर्त्य शुद्ध्यति । महापातकोपपातकेभ्यो मलिनीकरणेभ्यो मुच्यत" इत्यत्रिः । वेदपारायणं च विशिष्यैकं विधीयते । यथोक्तमत्रिणा "यथा महाह्रदे लोष्टं क्षिप्रं सर्वं विनश्यति। एवमात्मकृतं पापं त्रयी दहति देहिन" इति । बौधायनोऽप्याहस्म । तथाहि ऋतञ्च सत्यञ्चेत्येतदघमर्षणं

त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। आयं गौः पृश्निरक्रमीदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। द्रुपदादिवेन्मुमुचान इत्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। हंसः शुचिषदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते अपि वा व्याहृतीर्व्यस्ताः समस्ताश्चेति त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यत" इति। नन्वमीषामभ्युपायानां जागरणे कथङ्कारं दुराचारेभ्योऽव्यावृत्ता भवेयुः किल्बिषिगणा इतिचेन्नैवम्। तत्तस्यान्यथैवावगमयितव्यत्वात्। नहि गोपनसामग्रीसमवधानमपराधपौनःपुन्ये निमित्तमपि तु स्वनिष्ठवीर्य्यातिशयवशात्परिरक्षणक्षममेव दोषवताम्। नहि सन्निधानसामर्थ्याच्चेष्टयमानानां प्राणिनां स्वयं साक्षाच्चेष्टयिता विवस्वान् यथा महीरुहशाखाश्चालयति स्वयं नभस्वान् तथाच न पावनहेतूनास्थाय पापप्रसक्तैर्भवितव्यम्। यथाच स्मर्य्यते "न वेदबलमाश्रित्य पापकर्म्मरतिर्भवेत्। अज्ञानाच्च प्रमादाच्च दह्यते कर्म्म नेतर" दित्यत्रिणा भगवता। नन्वभ्युपायभूतयथोदाहृतावयवे प्रत्येकस्मिन् पार्थक्येनैव पाप्मापनोदनप्रभुताऽवगम्यमाना कथम्बहुतरोपायसमुच्चिचीषा प्रामाणिकी निगम्यतामिति मैवम् निरूपितोपायसमष्ट्यनुष्ठानावच्छेदेनैव पाप्मापनोदनप्रक्रियाया निराबाधायाः परिष्क्रियाविशेषविषयत्वात्। नहि तीव्रतरबुभुक्षाव्यथमानमानसानां प्ररोचनातिशयसमृद्धये प्रचुरतराः कल्प्यमानभक्ष्यभोज्यलेह्यचोष्यपोष्यादयोऽप्रस्तुततयाऽप्रयोजकतया वोत्प्रेक्ष्यन्ते द्विष्यन्ते वा प्रेक्षावद्भिः कथञ्चित्। अपित्वाप्यायपारम्परीमसिद्धये सन्नियतमर्य्यादाप्रतिपत्तये च तोष्टूयमानाः प्रमीयन्ते। तदेतन्न दोषायेति कृतमत्र दुर्हृदयमनीषिकया। एवञ्चोदितानुष्ठाने स्फीतमाहात्म्यसमास्कन्दिते तदिदं निगदव्याख्याताभ्यां ब्राह्मणकल्पसूत्राभ्यां व्याख्यातमेवेतीह विस्तरभयादुपरम्यते। दिव्य-

तीर्थपरिसेवनमप्यनुष्ठेयतया विहितं भवति । तदिदमुपनिबद्धश्रुतिघटकाभ्यां "स्थानासनाभ्यां विहरन्त" इतिपदाभ्यामालक्ष्यते प्रमाणान्तरैरवधार्य्यते च तदल्पं दीर्घं वेति यथायोगं प्रयोक्तव्यं प्रयोक्तृभिः । न च ते पदे स्थानासनसामान्यसञ्चरणमेव बोधयतो ननु तीर्थादिविशिष्टविषयमिति साम्प्रतम् । तयोरपि शुद्धिहेत्वन्यतमतयोपात्तत्वेन तावन्मात्रोपादानेऽतिशयासम्भवादतिप्रसक्तेर्दुष्परिहरत्वाच्च । इत्थञ्च समुद्रसंयानद्वीपान्तरप्रवासवतां ब्राह्मणानां यथावत्क्लृप्तत्रैवार्षिकप्रायश्चित्तमुपदिष्टं भवति । दीर्घकालिकतदनुष्ठानाशक्तौ यथोपन्यस्तप्राजापत्यचान्द्रायणप्राणायामगायत्रीजपशतरुद्रीयावर्त्तनवेदपारायणदिव्यतीर्थविहरणान्यनुकल्पभूतान्यभ्यनुज्ञातानि भवन्ति । क्षत्रियविशोरेतत् त्रिपादद्विपादाभ्यां मितं हि प्रायश्चित्तमनुक्रमेणादिष्टं भवति । शूद्रस्य तु जपहोमादावधिकाराभावः । यथोक्तमङ्गिरसा "तस्माच्छूद्रं समासाद्य सदा धर्म्मपथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् । शूद्रः कालेन शुध्येत गोब्राह्मणहिते रतः । दानैर्वाप्युपवासैर्वा द्विजशुश्रूषया तथे"ति । पराशरेणापि "शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति । ब्राह्मणांस्तु नमस्कृत्य पञ्चगव्येन शुध्यति । अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं हि तत् । सर्वधर्ममवाप्नोति द्विजैः संवर्द्धिताशिषा । दुर्बलेऽनुग्रहः कार्य्यस्तथा वै बालवृद्धयोः । अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः । स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रहं ये वै तत्पापं तेषु गच्छति । शरीरस्यात्यये प्राप्ते वदन्ति नियमं तु ये । महत्कार्योपरोधेन न स्वस्थस्य कदाचन । स्वस्थस्य मूढाः कुर्वन्ति नियमन्तु वदन्ति ये । ते तस्य विघ्नकर्त्तारः पतन्ति नरकेऽशुचा" विति स्मर्य्यते । यत्तु "कृच्छ्राण्येतानि

कार्य्याणि सदा वर्णत्रयेण तु। कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयत" इति स्मरणं तदेतत्काम्यकृच्छ्रविषयम्। यत्तु "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति। नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात्प्रतिषेधन" मिति स्मर्य्यते मनुना। तदिदं त्रैवर्णिकाधिकारिकादनीयानदनीयप्रकरणविशेषवशाल्लशुनपलाण्ड्वादिभक्षणे नास्ति पातकम्। विहितपाणिग्रहातिरिक्तसंस्कारश्च नार्हत्येव शूद्रः नास्योपवासादावधिकारो नित्यः नापि तदकरणात्प्रत्यवैति तत एवास्य नास्ति धर्म्मात्प्रतिषेधनं करणेऽभ्युदयोऽस्त्येवेति विवृतं मेधातिथिना। तथाच यथोदाहृतवाक्यार्थसमन्वयपर्य्यालोचनया पादमात्रप्रायश्चित्ताधिकारयोग्यताकत्वं शूद्रस्य गम्यते प्रामाणिकम्। स्मर्य्यते च "विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यत" इति विष्णुना भगवता एवं चातुर्वर्णिकानामुपपन्ने प्रायश्चित्ते तद्भूमिकापि दिङ्मात्रेण प्रदर्श्यते। तथाहि मासस्वशेषेषु च सितासितपक्षयोरविशेषेण तदारम्भोपपत्तिः। तत्र चाष्टमीचतुर्द्दश्योस्तिथ्योर्वासरयोश्च मन्दभौमयोरनारम्भ इत्येतावान् विशेषः। तीर्थक्षेत्रादौ तन्निर्वर्त्तनं वीर्य्यवत्तरम्। विप्रकृष्टतमे तस्मिन् गोष्ठं वा तत्कर्म्मयोग्यताकमनुगृह्यते गुरोः सन्निधानेऽपि तद्योगो योग्यो भवति। स्मर्य्यते च "नाष्टम्यां न चतुर्द्दश्यां प्रायश्चित्तपरीक्षणम्। शनिमङ्गलयोश्चापि न कर्तव्यं कदाचन। अनुपोष्य च रात्रिञ्च तीर्थान्यनभिगम्य च। अदत्वा काञ्चनं गाश्च दरिद्रो नाम जायते "यत्र क्वचन नर्म्मदातीरे यमुनातीरे गंगायां विशेषतः कुशावर्त्ते बिल्वके नीलपर्वते कनखले भृगुतुङ्गे केदारे महालये फल्गुतीर्थे महागंगायां त्रिहलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः गंगाद्वारे प्रयागे च गंगासागरसङ्गमे सततं नैमिषारण्ये वाराणस्यां विशेषतः अगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योति-

षायाश्च सङ्गमे श्रीपर्वते कालोदके उत्तरमानसे सप्तार्षे विष्णुपदे स्वर्गमार्गपदे गोदावर्य्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायां इरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे एवमादिष्वथाऽन्येषु तीर्थेषु सरिद्वरासु सर्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु पर्वतेषु निकुञ्जेषु वनेषूपवनेषु गोष्ठेषु मनोज्ञेषु च "यत्करोति गयाक्षेत्रे प्रभासे पुष्करेऽपि च। प्रयागे नैमिषारण्ये सर्वमानन्त्यमुच्यते १ गंगायमुनयोस्तीरे तीर्थे वाऽमरकण्टके। नर्म्मदायां गयातीरे सर्वमानन्त्यमुच्यते २ वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये। सप्तारण्येऽसिरूपे च यत्तदक्षय्यमुच्यते ३ गुरुः परतरं तीर्थमतस्तीर्थं न विद्यत" इति यथाक्रमं संवर्त्तविष्णुगौतमशङ्खैः पूर्वस्मिन्नहनि वपनं विधायाज्यं पयो वा प्राश्य संक्षिप्तकालसंख्योल्लेखपूर्वकं हि सङ्कल्पो विधातव्यः। तथाच श्रूयते। केशश्मश्रुवपते नखानि निकृन्तते दतो धावत इति सूत्र्यते च केशश्मश्रूणि वापयेयुः नखानि च मृदादिभिर्यथाश्रुतं स्नायात्। भगवन्तमनुस्मरेत्। नातिरिक्ता वाचो वदेयुः न शूद्रेण सम्भाषेरन्। न स्त्रीभिः सह संवसेयुः न दन्तान्दर्शयेरन् सन्धिवेलयोर्वाचं यच्छेयुरित्येवमादि तदेतन्नियमानुपालनपुरःसरं परेद्युः पुनररुणोदये स्नात्वा यथावदीश्वरमनुस्मरन् पूर्वाभिमुख उत्तराभिमुखो वा भूत्वा कुशानास्तीर्य्य तदुपरि प्रायश्चित्तद्रव्याणि संस्थाप्य दर्भपवित्रपाणिराचान्तः प्राणानायम्य देशकालौ सङ्कीर्त्य ममामुकगोत्रोद्भवस्यामुकशर्म्मणो वर्म्मणो गुप्तस्य दासस्य वा ब्रह्मत्वक्षत्रत्वादिमहापतननिमित्तभूतसमुद्रसंयानद्वीपान्तरप्रवसनाद्युपचितोपपातकमहापातकापात्रीकरणमलिनीकरणादिदुरितक्षयार्थं ब्राह्म्यादियोग्यताधिकारसिध्यर्थञ्च त्रैवार्षिकाव्रतानुकल्पभूतप्रायश्चित्ताख्यं कर्म्म करिष्य इति सङ्कल्प्य यथोपन्यस्तविधिना प्राजापत्यचान्द्रायणगायत्रीजपप्राणायामरुद्रीयावर्त्तनादिब्राह्मणसन्तर्पणपर्य्यन्तङ्कर्म्म यथाऽधिकारं

निर्वर्त्य स्वस्त्ययनं वाचयित्वा शिष्टैरनुज्ञातः स्वयम्भुञ्जीत निजनिकेतनं यात्वा यथाविभवं सविनयं सप्रार्थनञ्च ज्ञातीयाँश्च भोजयेत् नातः परं प्रसज्येरन् यथोदीरितप्रत्यवायजनिकासु क्रियासु अन्यथा कुञ्जरशौचप्रक्रियेव कृतानुग्रहविग्रहाणामप्युपहासपात्रताऽऽपत्तिरपरिहार्य्यप्राया अत एव "कृते पापे यस्य पुंसः पश्चात्तापोऽनुजायते। प्रायश्चित्तं तु तस्यैव कर्त्तव्यं नेतरस्य तु । जातानुतापस्य भवेत्प्रायश्चित्तं यथोदितम् । नानुतापस्य पुंसस्तु प्रायश्चित्तं न विद्यते । नाश्वमेधफलेनापि नानुतापे विशुध्यते । तस्माज्जातानुतापस्य प्रायश्चित्तं विशुद्धय" इति स्मर्य्यते हि हारीतेन । यद्यपि सद्योजातानुतापतया विग्रहादिनिर्ज्ञातविशेषहेतुभ्यः प्रत्याधीयन्ते प्रायश्चित्तीयजनाः केचन तथापि तदवस्थातः पर्य्यायेण व्यावर्त्तमानाश्चोत्तमसाहसिकसंघान्तःपतिततया निग्रहैकयोग्यताकाः पर्य्यवस्येरन्नित्यानुकूल्यमाद्रियन्तां मतिमद्भिर्यतः संव्यवहार्य्यतायामविप्रतिपन्नविचारणावन्तो भवेयुर्बान्धवादयः । ननु यथोक्तप्रायश्चित्तैर्य्यथोदितदुरितेभ्यःसंशुद्धिर्जायतां नाम परमेभिः सार्द्धं "श्रोत्रिया यत्र नाश्नन्ति न देवास्तत्र भुञ्जते । श्रोत्रियेभ्यः परं नास्ति दैवतं तारणं महदि"ति गौतमस्मृतेराचाराच्चाचरितप्रायश्चित्तैरप्यभ्यवहारादिव्यवहारमकुर्वाणैः श्रौत्रियैः क्रियमाणायामुपेक्षायामसंव्यवहार्य्यतैवार्थिकी सती किन्नः श्रेयः प्रायश्चित्तप्रयासवतामिति बाढम् तथापि युष्माकमुत्तरकालीनक्रियानैर्म्मल्यमनुसंधास्यमानास्तद्गोचरनिरपवादप्रत्यये सजग्ध्यादिभिरनुगृह्णीयुरेवदयालुतया श्रोत्रिया अपि पर्य्यायेण दयनीयान् वै युष्मान् । नहि पङ्क्तिपावनाः पङ्क्तिदूषकप्रतीतिमत्तामापन्नैः सहसासहभोजनादिव्यापारानविगीतान्मन्येरन् विगीताविगीतवस्तुनोरितरेतरप्रत्यनीकभावस्य साहजिकत्वात् । न प्रायश्चित्तीयजनविशेषविषयासंव्यवहार्य्यतानिबन्धनाग्रहातिशयः श्रोत्रियाणामतो न भवत्येव दोषाधायकः ।

वस्तुतस्तु सुवृत्तदुर्वृत्तभेदभिन्ना अपि स्वीयताऽतिरेकवर्जिततया परपरम्पराक्रमानवसमवायघटकताऽनाश्रयतया चोद्वृत्तवर्त्तना अप्यवलंबितनिजांशाभिमानैरपरामृष्टशैषिकक्रियावैधर्म्यहेतुवादैरभिप्रवृत्तदाक्षिण्यवीचीपरम्पराकैरवधारितशास्त्रार्थप्रचयसाभिप्रायाभिनिवेशवद्भिश्चानुग्राह्या एव यया कयाचिद्विधयाऽऽचार्य्यैर्ज्ञातीयैः कौटुम्बिकैः कदाचित् उच्छास्त्रप्रवृत्तिश्च कामतोऽकामतो वाऽऽलक्ष्यते । नच प्रवृत्तिसामान्यस्य "यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्म्मणा करोती"ति श्रुत्या व्यापकान्तःकरणप्रचारपूर्वकत्वमवक्लृप्तं सत्कथमकामतः क्रियालेशो वा नैरात्म्यापत्तिलक्षणः सम्पद्यतामिति साम्प्रतम् तथाविधानुभूतिभेदस्य सार्वजनीनत्वात् । नचा "न्यत्र मना नाद्राक्षमन्यत्रमना नाश्रौष" मित्येवमादिकया श्रुत्या मूलीभूतमनोनिवेशनमृते कतिपयकालावयवव्यापिनि दर्शनश्रवणात्मन्यपि वा कर्म्मण्यप्रवृत्ते निरवच्छिन्नकालावयवव्यक्तिभिः सम्पादनीये नानाविन्यासचातुरीसमास्कन्दितेऽर्थातिशये कथमबुद्धिपूर्विकाकृतिरुपजायतामिति शक्यमाक्षेप्तुम् विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणलक्षणनिर्णयसंस्पर्शमन्तरायादृच्छिकक्रियाभिमुखप्रवृत्तिविशेषस्यैव तत्रतत्र तदातदा प्रसक्तिविषयीभूतस्याबुद्धिपूर्व्वकक्रियाविशेषव्यपदेशभागभागित्वात् यद्येवं नाभविष्यत्तर्हि "प्रमादो मानुषो भाव" इति कृष्णद्वैपायनस्मरणानुग्राहक "सत्यान्न प्रमदितव्यम् धर्म्मान्न प्रमदितव्यम् कुशलान्न प्रमदितव्यम् भूत्यै न प्रमदितव्यम् देवपितृकार्य्याभ्यां न प्रमदितव्यमित्येवं जातीयकानामनितिकर्त्तव्यताऽभिमुखप्रवृत्तिविमुखीकरणपराणां श्रुतीनां प्रवृत्तिर्न्निरात्मकमेवोद्देश्यमवाकल्पयिष्यत् नचैवं सम्भवति प्रमादाद्यनुवादिन्याः श्रुतेर्भगवत्या निरपवादनिरूपणाधीनयोग्यताकत्वात् तदिदमुक्तमबुद्धिपूर्विकैवैच्छिकी प्रवृत्तिरिति एतदेवाभिप्रेत्य "अकामतः कृते पापे प्रायश्चित्तं विदु-

बुधाः । कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनादि"त्यभ्यधायि सर्वज्ञसङ्काशेन मनुना । नन्वेवंविधयोपपत्त्या मानवसामान्यविषयया कोन्वत्र तस्या विषयीभूतः परिशिष्यताम् नैष दोषः यथोक्तव्यवस्थायास्तत्सामान्यमुद्दिश्यैवार्थवत्त्वात् यदि कश्चित्प्रकृष्टसंस्कारजन्मा सर्वस्मान्मुच्येत प्रमादात् तदप्यपवादवर्गीणं न शक्नुमोऽधिगंतुम् सुसूक्ष्मदृष्टीनामपि सूक्ष्मापराधदर्शनात् । नचैवं निरूप्यमाणे प्रमादिनां प्रमादतरताया अप्रमादिनां प्रमादिवर्गसंनिवेशस्य चोत्तेजनसम्भवात् प्रत्युतानर्थसमर्थनमेव पर्य्यवस्येदिति वाच्यम् प्रमादविषयस्वाभाविकप्रवृत्तिमात्रानुवादस्य विवक्षणीयत्वात् । नह्यनुवादो हानोपादानयोरर्थस्य विधायकः स्वभावाभावापत्तेः । नहि नद्यास्तीरे फलानि सन्तीति वाक्यं फलानामुत्पादनमन्यद्वा किञ्चिद्विधत्ते अपित्ववस्थानमेव तेषाम् । नह्यपवादवाक्यसन्दर्भेऽप्युत्सर्ग एव ध्रौव्यमभ्युपेयात् नहि मा हिंस्यात्सर्वभूतानीति वाक्यमग्नीषोमीयं पशुमालभेतेति विशेषशास्त्रापरपर्य्यायापवादवचनविशेषसमवधानेऽपि स्थायिभावमापद्यते तयोर्व्यवस्थानस्यैवोच्छेद्यत्वापत्तेः तदिदमुक्तं भवति निर्वापणीयतयाऽऽपन्ने प्रमादे नानिर्वापणविषयता तस्य कदाचित्संभवति नहि विषं मा भुंक्ष्वेति प्रयुक्तेऽपि तद्भोजनमेव शक्यग्रहमुत्तेजनास्पदमिति शिक्षितात्मा कश्चन ब्रूयात् । नहि बहुकृत्वो निगृह्यमाणा अपि तास्करीयाद्युत्कटापराधनिर्बद्धाः पुनः पुनस्तत्र तत्र प्रसक्ता एवेत्यपराधानामनवस्थापातः शासनशासित्रोर्युक्तचेष्टाविरहवलमित्यादयो व्यग्रप्रकारास्तथासति सम्भवेयुरिति साधीयः यावत्पापकर्म्मानुवर्त्तनं तावत्तत्कर्तॄणां यथापराधदण्डार्हतायाः "शंका चेदनुमास्त्येव नचेच्छङ्का कुतस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिर्म्मतः नचाऽशङ्का नचोत्तर"मिति शङ्कासमाधानयोरनवस्थापातप्रसङ्गनिर्म्मोचकस्य खण्डनकुसुमाञ्ज-

त्युन्नीतन्यायातिशयस्य पर्य्यालोचनया निरतिशयाया रूढतरत्वात् न तत्र शासनशासितित्रितिकर्त्तव्यताव्यग्रतावकाश इति । ननु "कामतः पतनीयेषु मरणाच्छुद्धिमृच्छति । हयमेधायनः शुद्धिः सार्वभौमस्य भूपतेः । कामतस्त्वनुपापेषु लोके न व्यवहार्य्यता । महत्सु चातिपापेषु प्रदीप्तं ज्वलनं विशे"दिति हारीतसंहितावचनाभिसन्धिमवधारयमाणैर्व्यवहार्य्यत्वाभाव एव द्वीपान्तरङ्गतानामुपपातकप्रसक्तिविवक्षयेति चेन्न "इति योगीश्वरेणोक्तमुपपापेषु तत्रतत् तस्मादकामतः पापं प्रायश्चित्तेन शुध्यती"त्युत्तरवचनादेव प्रायश्चित्तीयताऽर्हतोपपत्तेः—पाप्मन्यकामकृतत्वञ्च प्रवृत्तिविशिष्टान्यत्वं वैशिष्ट्यञ्च स्वविशिष्टनिश्चयविशिष्टत्वसम्बन्धेन निश्चये स्ववैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वविषयार्थनिष्ठवैधत्वावैधत्वान्यतरनिष्ठप्रकारतानिरूपितस्वविषयनिष्ठविशेष्यताकत्वोभयसम्बन्धेन निश्चयवैशिष्ट्यञ्च स्वानिरूपिततादृशान्यतरनिष्ठप्रकारतानिरूपितविशेष्यतावत्वसम्बन्धेनेति निष्कर्षः इत्थञ्च धर्म्मे विरोधविशेषास्पदीभूतसंव्यवहार्य्यताविवक्षयाऽसंव्यवहार्य्यतां न्याय्यतरां मन्यमाना अपि निजश्रेणीह्रासातिशयमनुपदमनुभूयमानसांसर्गिकनिमित्तेभ्यः प्रतिसन्दधानाः प्रत्युत तेषु वात्सल्योपनीतसंव्यवहार्य्यतामेव समस्तव्यवहाराकारपर्य्यवेक्षया स्वस्त्ययनैकनिदानतया न्याय्यतमां विजानन्तु प्रकृतिपरिषद्वरास्तावत्तराम् ।

यद्यपि धर्म्मः प्रियतमस्तथापि ततः क्वचित्कदाचिदेतन्निबन्धप्रसिद्धिप्रसाराभ्यां प्रागेव केवलं प्रच्युतिमापन्ना अप्यात्मीयतया तथात्वेनैव योजनीयाः विपर्य्ययेण लक्ष्यमाणा अप्यार्य्यसन्तानसमसत्तातोऽव्यावृत्तचराः कथंकारं स्वेभ्यः सर्वशो व्यावृत्तस्वरूपविशेषसमर्पणयोग्यानिगद्येरन् पराभ्योऽप्यशेषश्रेणीभ्यस्तद्वदेव व्यवकलनविशेषवत्तां विन्दमाना नोभयातिगामेव श्रेणीं कांचिद्धारयिष्यमाणा अप्यात्मीयतां कथञ्चिज्जह्युः नवा वयं जहाम आत्मीयतामेतावता तन्निष्ठाम् तदसावाभा-

ष्यतेऽभ्यनुज्ञायते च न्याय्यतया निजायां जातौ संव्यवहार्य्यता हि तेषामाचरितयथोपन्यस्तप्रायश्चित्तानामपुनःप्रवृत्तदुर्वृत्तानाञ्च चातुर्वर्णिकानामिति स्थितम्—येत्वसकृत्समुद्रसंयानद्वीपान्तरप्रयाणप्रसक्ताह्यतिलङ्घिताचारविचारप्रचारप्रबन्धसामान्याश्च मानवा न ते सर्वथैव व्यवहर्त्तव्याः सन्मार्गानुगामिभिर्जातौ जातीयैः परिषद्वरैश्च जातुचित् नवा ते क्वचिदपि निष्कृतिक्रियाभिः शुद्धिमृच्छन्ति नापि तास्वर्हतावा तेषामुपपद्यते अपरामृष्टेतिकर्त्तव्यताकत्वादजातानुतापत्वादप्रध्वस्तविहितार्थसाधारण्याच्च नान्यात्वेतस्यागतिर्य्यथाऽपराधमुपेक्षावर्ज्यमवकल्पत इति नात्र कश्चित्कौटुम्बिको वा जातीयो वा प्रशास्ता वा क्वचिदप्यपराध्यति यथावन्निरूपकतयेत्यवधेयम्—नानादेशीयमनीषिसामन्तादिपुरुतरप्रार्थनया प्रस्तुतविवादापनुत्तये विहितोऽयं निबन्ध आसेतोराहिमाद्रेराच प्राचीप्रतीचीमहार्णवाभ्यां चातुर्वर्ण्यचातुराश्रम्ययोरविगीतप्रवृत्तये सनातनवैदिकधर्म्मसंगुप्तये च भूयादिति शिवम्.

व्युत्पादितार्थसार्थं मञ्जुलमत्या विविच्य परमार्थम् ।
धीरास्तु निर्विशङ्काः साराहाराश्च बोभवन्त्वनिशम् ॥ १ ॥

---

आदित्यवसुसोमै१८१२स्तु मिते भद्रे शके मुदा ।
विकृतेः कार्तिके मासे द्वितीयस्यां भृगोर्दिने ॥ १ ॥
मालवे रत्नपुर्यां हि निबन्धो निरमाय्यसौ ।
शिष्यसञ्चारशालिन्यां मया लोकार्थहेतवे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यवर्य्यपदवाक्यप्रमाणपारावारपारीणत्वाद्यनेकपदाङ्कितजगद्गुरुश्रीमच्छङ्कराचार्य्यश्रीशारदापीठद्वारकासंस्थानाधीश्वरश्रीमत्केशवाश्रमस्वामिदेशिकवरकरकमलसञ्जातजगद्गुरुश्रीमच्छङ्कराचार्यश्रीशारदापीठद्वारकासंस्थानाधीश्वरश्रीमद्राजराजेश्वरशङ्कराश्रमस्वामिविरचिता पर्य्यटनमीमांसा समाप्ता.



श्रीशारदाम्बा विजयतेतराम्.

# पर्य्यटनमीमांसा

श्रीमत्परमहंसपरिव्राजकाचार्य्यवर्य्यजगद्गुरुश्री-
मच्छङ्कराचार्य्यश्रीशारदापीठद्वारकासं-
स्थानाधीश्वरश्रीमद्राजराजेश्वर-
शङ्कराश्रमस्वामिनां कृति-
रेषा जागर्तितराम्.



मुंबय्यां निर्णयसागराख्यमुद्रणालये मुद्रापितम्.



संवत् १९४७.

जयतिभगवान् हरिणाङ्कचूडामणिः

# पर्य्यटनमीमांसा·



प्राहुर्य्यस्य प्रदीप्तिं हुतवहरविसोमादिरोचिःप्रकीर्त्ति
ज्ञानञ्चाचेतनात्मत्रिभुवननिबिडध्वान्तमोहापहानम् ।
सत्यं तत्तुच्छभानापगमपरिचितेर्नेतृकं वेदवाच-
स्तं वन्दे सर्वभावैरतुलितकरुणानीरधिं ब्रह्म साम्बम् ॥१॥

यदीयाभिर्ज्ञानाद्यभिमतकलाभिश्च तिसृभि-
र्विचित्रं विश्वं नोऽनुभवपरिपाटीपथगतम् ।
तदप्याम्नायाद्यैर्विहितबहुविन्यासभणितं
तथाप्यस्मादेव व्यवहितगतौ नैव गरिमा ॥ २ ॥

आशास्वद्य महेशभूरिमहिमप्रद्योतितासु स्वयं
खण्डेऽस्मिन्नुपमानहीनसुभगेप्यालक्ष्यतेदभ्रता ।
औन्नत्यस्य महाविभूतिनिलयानामप्यतो दन्तुरां
चर्य्यां वीक्ष्य विलोपने बहुविदो धर्म्मस्य मुह्यन्ति नः ॥३॥

तस्मादस्मत्प्रकृतिविशदं धर्म्मतन्त्रं प्रकृत्य
प्रायो वेदं तदनु विमलान्यार्षवाक्यानि शश्वत् ।
आस्थायेदं प्रकरणमथोप्याङ्गलादिप्रभिन्न-
द्वीपोद्युक्तानपि करुणया वक्ति किञ्चिन्निगूढम् ॥ ४ ॥

इह खलु ब्राह्मणादीनां प्रत्यासन्नसमारम्भसंसाधनैकनिकामानां प्रस्तुते हि गम्यागम्यदेशविशेषविमर्शादिप्रस्तावे किं सर्वे सर्वदैव गमनयोग्या उत समयभेदेन तदेकदेशा वा तदनर्हतायां के वा नियन्तारो विशेषहेतवः सामान्या वा के च तत्प्रयोजकाः किं तत्र प्रमाणं मर्य्यादासमभ्यक्तक्षेमङ्करार्थपर्य्याप्तमथ यथावदसम्प्रतिपत्तौ तथाविधप्रवर्त्तनापरिचोद्यमानास्तद्द्विपर्य्ययप्रचारप्रचुरैः स्वजातीयैः संव्यवहार्य्या भवेयुर्नवा इत्याद्याः प्रवर्त्तन्ते जिज्ञासाः ।

ननु तत्र "सर्वै भूमेरजायत तस्माद्भूमिरजायत । धातायथापूर्वमकल्पयद्दिवंचपृथिवीञ्चे" त्याथर्वणबह्वृचश्रुतिभ्यां नियन्तुर्महेश्वरस्यासजातीयसिसृक्षासम्वलितत्वाभावस्य प्रमाणसामान्यगम्यत्वात्तदायत्तमहीमण्डलभेदानामविभिन्नमानास्पदतया प्रक्रमातिशयसमाहारनिर्वाहकतया च वैषम्यापादकप्रवृत्तिममताया मानहीनत्वान्मतिमद्विचारपदवीबाह्यत्वाच्च त्रैकालिकप्रवासविषययावद्देशसङ्कोचविकासप्रत्ययधाराया अयुक्तत्वमितिचेदुच्यते जीमूतैकनिदानवारिधारास्वरसवाहिप्रवृत्तेरविरूपत्वेपि सङ्किरद्वाराधिष्ठानधरित्रीकर्षणबीजविशेषाद्यसाधारणकारणप्रयोज्यसस्यादिसमृद्धेरितरेतररसवीर्य्यविपाकवैलक्षण्योपलक्षितायाः समस्तानुभवसिद्धायाः सम्भावनीयत्ववदत्रापि विश्वसाधारणकारणमहेश्वराभिगाम्यनुभवानुविधाय्यसाधारणकारणानुकार्य्युर्व्वीमण्डलव्यवस्थायाः परस्परपरिभाषासमवसितायाः "प्रजा ह तिस्रो अत्यायमीयुः अथरमणीयचरणा अभ्याशोहयत्ते रमणीयां योनिमाप-

द्यन्ते अथकपूयचरणा अभ्याशोहयत्ते कपूयांयोनिमापद्यन्त" इति ऋक्सामयोरर्थानुसन्धानमहिम्ना स्वरूपतः पर्य्यालोचनीयत्वात् तद्वर्गीणान्योन्यव्यवहितस्वरूपाधीनविग्रहवत्त्वादितरेतरप्रकृत्याकृतिचेष्टितानामनुभाव्यत्वमध्यवसीयमानं सन्मतिमद्विचारणासमारूढमवगम्यते । ततः पारम्परिकवैषम्यसम्भावनाया वस्तुस्थित्यनुविधायितया न तद्गोचरममताया वैफल्यगन्धः कदाचित् ततश्च प्रवासविषयदेशविशेषसङ्कोचविकासानुकूलप्रत्ययधारायास्सर्वदैव योग्यता सुगमा । न च समास्वादनार्हनानाप्रक्रमप्रयुक्तेः प्रेक्षावदभ्यर्हिततराया व्यावहारिकक्रियानिष्पादनैकरूपायास्तथा सत्यसङ्गतत्वमेवेति वाच्यम् महोद्यमामोदस्य सम्मततरत्वेपि तत्परीतोदितान्तरायजालस्याभ्यर्हिततरा पूर्वविघटनाधीनस्य दुराधर्षणीयत्वात्तारतम्यविमर्शतोवाऽऽभ्युदयिकानुवृत्तेः परिनिष्ठितत्वाच्च ।

ननु देशानामेकदेशानीर्णोमोक्तदिशाभिगम्यताचिन्तायामपि यस्मै यदर्थप्रारीप्सापरिप्रेरिततया रोचते यो देशः सएव तस्याभिगम्यो विनिगमकान्तरस्याकिञ्चित्करत्वादुत यथाकथञ्चित्कतिपयविचारकसमयग्रहाधीनपरिलिखितदेशएववाऽऽहोस्विच्छास्त्रस्थपरिसङ्ख्यानगोचर इति । नाद्यः सर्वेण सर्वस्य गम्यत्वापत्तेः न चेष्टापत्तिः शक्याद्यादत्तुम् अनवस्थापातस्यैच्छिकाचारचर्वणालम्बिव्यग्रतानिकारस्य निह्नवैकयोग्यत्वात् । न द्वितीयः परिच्छिन्नविचारकोद्दिष्टप्रमेयविशेषस्य विचारकान्तरेणाभासीकरणप्रवादगोचरत्वात् ।

नच तर्ह्यतीतानागतादिपरीक्षकसमाहारसम्भवो न क्वचिदप्यधिकरणे येनैकत्वमध्यवसीयेतेतिवाच्यम् अभियुक्ततमसम्वित्प्रकाण्डस्य निदाघमार्त्तण्डपरप्रभाप्रस्थानतया वनसिंहन्यायोपजीवितत्वेन समस्ताभिभावकतायाः सम्प्रतिपन्नत्वात् तथात्वेनैव महामहामीमांसाया विशिष्टप्रचारसाक्षिकत्वाच्च ।

यद्यपीष्यत एवात्र तृतीयः परमत्र विवेक्तव्याः शास्त्रस्थाः तत्तद्वर्गीणवैदुष्योत्कर्षापकर्षभावसम्भावितानामप्यतिशयितकलाकलापयोगमाहात्म्यैस्त्रिलोकीपरिभ्रामितकीर्तिजालाः परिगृह्यन्ते महर्षयः नत्ववर्वाचीनाः प्राचीनावाङ्नेयैकदेशविचारचातुरीसंभ्रान्तधीविलासा विगीतप्रचारपराहतपरार्थशेमुषीकाः सम्मान्यन्ते भरतखण्डबहिर्भूता अप्यत्र विचारकम्मन्याः विचारो वाऽमीषां भरतवर्षनिरवद्यविद्याव्यवहारपरिपाटीसम्प्रसारणप्राणः प्रतीयते । भूतपूर्वप्रतिभाऽनधीनप्रतिभोद्गमोहि तेषां प्रत्ययवैलक्षण्यादनीदृगाभासभासुरोपि पुरा भरतवर्षसंस्तवसंराधनाभ्यामभूतपूर्वएव कार्य्यप्रत्यासत्त्याऽवसीयते । यदि तं प्रधानतन्त्रेषु प्रामाणिकनिबन्धेभ्यः प्राक्ताभ्यामभ्युपगच्छेमांशतस्तर्ह्यपरप्रयुक्ततत्पाटवमादरगोचरं ब्रूयाम । नचैवं किञ्चन तादृक्प्रतीत्याधायकमनपनोद्यक्रियाविशेषवासितमाधिगच्छामो यतो विपर्ययग्रहग्राह्यकिञ्चनपरिधानादिप्रक्रियायाः काननागारनरनिकरवेषभाषापरिपोषसमास्कन्दितायाः प्रतिप्रकरणमवधारणीयता । संस्तवातिशयवतापि पुस्तभारेभ्यः शैक्षवैखरीप्रत्याकूतसंशीलनेभ्यो गभीरभावातिभारसौरभमापाततो वा प्रशंस्यते तारतम्यचर्चायां जातुचित् । अनुमोद्यमानं वा मोमुह्यमानमतिप्रचारचञ्चरीकनिस्स्वनैकनिदर्शनमेव सदसम्पन्नसामग्रीकतया न कस्याश्चिद्रसव्यक्तेः साधनायालम् । अर्थतः सामीप्यसारूप्यकथातु कथैव केवलमकथकपरिषद्दाक्षिण्यकृते संक्षेपविस्तराभ्यामित्यविसंवादिन्येवार्थावगतिः । आगमिकी वा तेषामिहत्यवैतानिकनरनिवहातिपातिवैकृतिकाख्यानप्रख्यापनैकनिरतेभ्यः प्राकृतजनतामात्रसंमाननीयेभ्योऽर्थान्नातिशेत एव शैली समन्ततः प्रत्युत ततोपि प्रहीणलावण्यकारुण्यस्वरसमैत्रीका रजश्चेष्टासमाच्छन्नक्रियावाहा निधनभावानुनीतसत्लमहाप्रस्थाना एव परस्प्रतीयन्ते । नचैष

गुणग्रामः परत्रापि संकृप्तव्यवस्थाकतयौहिकाखण्डलैरप्युन्नेतुमनर्ह इति शक्यमभिधातुम् योयन्निरूपितसांसिद्धिकप्रकाराक्रान्तः सतन्निरूपिततज्जातीयविशेषणानधीनविशेषणासन्तानक इति न्यायानुकार्य्यनियत्ताकनिदर्शनानामागोपालाविपालप्रथितानामप्रत्यूहमभिनिष्पत्तेः । नह्यन्यथानुमानमुदितानुभूतिपराभूतिप्रभवमभियुक्ततराकलितम्वा तात्विकप्रत्यक्षमर्य्यादातिशायित्वात् । एवञ्च प्रमाणगणैरवधार्य्यमाणप्रतिष्ठिततमसमारम्भवरूथे हि भरतवर्षे सिद्धे तदौन्नत्यनियन्तृषिप्रणालीसमुद्दीव्यदनन्तप्रबन्धराद्धान्तितार्थविशेषा एवार्हन्ति प्रमाणभूमिकां यतः शब्दार्थस्थितिष्वृषीणामेवाभियुक्तत्वे विहङ्गमादीनां बन्धनभेदनादावन्येषां द्वीपान्तराधिष्ठितमानवानामभियुक्ततरत्वमानुभविकम् । ये यदायत्ताभियुक्तभावभाजनं ते तदास्पदादेशधाटीपरीरम्भभविष्णव एवेति तद्बन्धनादि परिस्पन्दनोपसर्जनसन्धानान्नातिवर्त्तेरन् तदनुकरणवन्तोऽपि रूपान्तरानापन्नाः सर्वत्रेति परोऽविमर्शः । तथाच शिष्टपदाभिधेयापरपर्य्यायमहर्षिपरिसंख्यानप्रक्रियायां मूलीभूताम्नायप्रघट्टिका एव संघटिकाः उत्सन्नानुत्सन्नतद्वाक्यार्थस्मर्त्तृत्वेन महर्षीणामेवाधिकृतत्त्वात् । यथाहुः "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति । नर्ते तानितरत्र वा तत्परम्पराकेषु तथाविधाभियुक्ततानभ्युपगमे ततः परं बाह्यतरेषु द्वीपान्तरभवन्मानवेषु तद्बन्धसम्भव इति व्यक्ततरम् तदीयपरिनिष्ठितप्रमाणैरभिगम्यत्वानभिगम्यत्वयोर्विवेचयिष्यमाणयोः सार्वदेशिकैकदेशिकाभिगम्यत्वस्यापि तथात्वात् । परिशिष्टजिज्ञासानामपि तत्तुल्यप्रत्यासत्त्यैवावधारयिष्यमाणत्वात् ।

प्रकृते च ब्राह्मणादीनां भरतवर्षबाह्यभागाभिगमनमतिकारुणिकश्रुतिस्मृतीतिहासेभ्यः प्रतिषेधगोचरः प्रतीयते भारतवर्षेपि नि-

मित्तान्यनुसन्दधानाः प्रान्तविशेषविषयप्रवासनिषेधं वर्णयाम्बभूवुः देशानां गम्यत्वागम्यत्वचिन्तायामभ्युदयनिःश्रेयसोपायानुष्ठानानपहान्यपहान्योः प्रयोजकता तदनुष्ठात्रधिकारिजनसाङ्गत्याभावस्तद्वियोजकमानवमहामण्डलीसमागमपरीतता उद्धृत्ततप्राग्भारश्च ततश्चिरन्तनसंप्रदायोच्छेदएव चरमापूर्वं तस्यापतेत् एवमाद्यमितसदर्थसंलोपविपत्तिपर्य्यालोचनया गम्यागम्यविचारणाहि प्रमाणपीठमधितिष्ठत्येव प्रतियोग्यभावस्वरूपव्यवस्थितमर्य्यादामुद्रया । तथाहि "सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति १ सौराष्ट्रसिन्धुसौवीरानवन्तीदक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनः संस्कारमर्हती" ति स्मरणानि भरतवर्षान्तःपातिनामपि सिन्ध्वादीनामगम्यत्वं गमनप्रसक्तौ प्रायश्चित्तार्हताञ्चोद्बोधयन्त्युन्मार्गवर्त्तनायत्तप्रत्ययभेदानेव लक्षीकुर्वन्ति यद्यप्येते देशाः समष्ट्याचार्य्यावर्त्तपदवाच्यतां भजमानाः संपद्यन्ते विशिष्टगम्यत्वमेवाविशेषतस्तथाप्यार्य्याभासयवनादिजातीयाभ्यामभिभूतसदाचारप्रचारतया तावन्मात्रप्रधानपरिदृष्ट्याऽनभिगम्यत्वगन्तृगामिप्रायश्चित्तीयत्वे व्यवस्थापिते तदादिजनसङ्गसाङ्गत्यादेः समयभेदेन वा श्रौतवर्त्मपरिमार्जनैकपर्य्यवसायित्वसमीक्षावद्भिरभियुक्तैः । तथा च निजधर्म्मसङ्गोपनानुकूलक्रियामात्रनिर्वर्त्तने तन्ममतातिशयस्तदुत्पादनोत्सर्पदुत्पादनास्वत्यश्चदुच्चावचचिन्तनावतस्ताभ्यो वियोजयितुमेवाहन्ताभरस्तदीयोऽनुभूयते । ननु ते नीरसदुराग्रहफलेग्रहिणो मत्सरपित्ताम्भःपरिक्लेदितान्तःसम्भारा वा जातुचित् मृष्यामहे च साधुचर्य्याऽऽचरणप्रचारणामात्रस्वार्थेष्वकिञ्चनमनोवीचीसमुद्भावितान्यथाभावमभियुक्तप्रथितानुभावासहमानं तेषु तराम् । एवञ्च कैमुतिकन्यायेन भरतवर्षबहिर्भाविविषयविशेषावलम्बिप्रवासप्रतिषेधगोचरगिरां हि तेषामुदीरितमहत्त्वासन्ततानुसन्धानधा-

राभिरबाधितार्थविषयतयैव न्याय्या। तथा चाहुः "आसमुद्राच्च पूर्वाद्वा आसमुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः। पश्चात्सिन्धुर्विहरणी सूर्यस्योदयनं पुरा। यावत्कृष्णा विधावन्ति तावद्वै ब्रह्मवर्चस" मिति भाल्लवेयाः। अपि च "म्लेच्छदेशे तथा रात्रौ सन्ध्ययोश्च विशेषतः। न श्राद्धमाचरेत्प्राज्ञो म्लेच्छदेशे न च व्रजेत् १ न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकम् २ म्लेच्छावासस्तथा पक्षं यो वर्त्तेत स पातकी ३ न म्लेच्छविषये श्राद्धं कुर्यात् ४ न गच्छेन्म्लेच्छविषयम् ५" यत्र पानमपेयस्य देशेऽभक्ष्यस्य भक्षणम्। अगम्यागामिता यत्र तं देशं परिवर्जयेत्। परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छति। "समुद्रयायी कृतहा रथ्यासमयभेदकः। वेदनिन्दारतश्चैव देवनिन्दारतस्तथा। द्विजनिन्दारतश्चैव ते वर्ज्याः श्राद्धकर्मस्वि" त्याचक्षाणैर्भगवद्भिर्विष्णुशङ्खौशनःपराशरवसिष्ठमरीचिभिर्म्लेच्छदेशे पर्यटनश्राद्धक्रियानिष्पादनतत्रत्यजलाशयानन्यगतिकपानावगाहनपुरस्सराः प्रतिषिध्यन्ते व्यापाराः।

न च म्लेच्छदेशशब्द आरबस्थानतुरुष्कस्थानतार्त्तारादि महामण्डलमात्रवचनस्तद्गोचरामेव व्याख्यातपारम्परीमभिधत्ते न पुनः परिशिष्यमाणहूणादिद्वीपयातायातमहोत्साहन्यक्कारस्य वक्ता कर्हिचिदिति वाच्यम्। "चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। स म्लेच्छदेशो विज्ञेय आर्यावर्त्तस्ततः पर" इति भगवद्विष्णुस्मरणाच्चातुर्वर्ण्यचातुराश्रम्यव्यवस्थानसामान्याभावाधिकरणभूभेदमात्रस्य म्लेच्छशब्दशक्यतावच्छेदकावच्छिन्नत्वात् उपलक्षणमेतद्यावद्ब्राह्मानुष्ठानानुष्ठापनयोः अनधिकृतत्वे तयोर्दौर्ब्राह्मण्याब्राह्मण्यानुपादेयत्वानामर्थादवधेयतावगमः। इत्थं च चातुर्वर्ण्यादिव्यवस्थानविरहितत्वानुभवस्य हूणादिद्वीपेष्वप्यव्याहतत्वमिति फलतः समतैवावसीयते तयोरवान्तरभेदस्य दृष्टादृष्टप्रवृत्तिविशेषोपलक्षितस्य प्र-

सङ्गतो विचारसहत्वेऽपि तच्चिन्तनमकाण्डताण्डवप्रायमिदानीमित्युपरम्यते । नहि तत्रोक्तवर्णप्रतिनिधीयमानवर्णप्रस्थानसंक्रान्तिरपरिहार्य्या संपद्यते । कल्पनामात्रचित्रितत्वात् । "आर्यावर्त्तस्ततः पर" इत्यपरवाक्यनिगम्यमानपरिगणितवर्णव्यवस्थानायतनभूतभरतवर्षस्यैवार्य्यावर्त्तपदप्रवृत्तिनिमित्तापरपर्य्यायस्य व्यतिरेकमुद्रया प्रमितिविषयत्वात्तत्रैव तद्व्यवस्थानमिति वस्तुस्थितिः व्यवस्थानाव्यवस्थानयोरितरेतरप्रतिस्पर्द्धानिदानतया तत्फलभागस्यापि तथात्वमानुभविकम् ।

न च बौद्धावान्तरभेदानामवर्णाश्रमाचाराणामाम्नायार्थविद्वेषिणां मूलतो भरतवर्षशरणानामनवच्छिन्नसाहचर्य्योपनीततया परश्शतसमासमासादितम्लेच्छादिनिरङ्कुशनिवासानामित्थंभूतजञ्जरीपरिजृम्भिततया च तदादिपादचारपरिच्छिन्नार्यवसुधाविशेषस्य व्यामिश्रप्रचारचरस्य स्वरूपविलोप एवेति शक्यं पर्यनुयोक्तुम् बुद्धवर्त्मदुरुद्धरदुरावेशवासितत्वेऽपि वर्णाश्रममहार्णवैकजन्मतया कतिपयाचारानुवर्तनायत्तसौमनस्यपरिशंसि स्वात्मप्रस्थानत्वे बुद्धाध्वसन्निविष्टैरापातव्यापारपरिवर्त्तनस्य म्लेच्छैरप्यनतिदिष्टतथाविधविधानस्यासम्पृक्तसाम्परायिककृत्यकदम्बसम्बन्धस्य चाद्यावध्यशेषवर्णवर्त्तिनामप्रत्यूहमनुवृत्तेः पुरा हि तद्भूयस्त्वाद्युच्छ्रयतायामपि प्रजाश्च वर्णाश्रमसंस्थानमय्य एव प्रतिजनपदमुद्धृष्टाः सम्प्रत्यपि सैव सरणिः सामयिकी यतः स्वरूपविलोपकला तथा न ऋच्छेदनर्थपारम्पर्य्यम् न हि चीनचापानतीबेटप्रभृतिदेशभेदानां बौद्धसन्तानैकसंव्यापिनामार्यवर्षबहिष्ठत्वेपि तन्मानवमूलीभूतचातुर्वर्ण्यसम्बन्धाभिधित्सया तद्देशाभिगमनमविप्रतिपन्नमुपपद्यताम् सर्वतश्चातुर्वर्ण्यव्यवस्थाहीनविजातीयप्रकारविकारवत्त्वात्तद्देशानामित्यवधारणीयत्वात् सति चैवमुच्छास्त्रोद्देशपरिशीलितस्वान्तानामेव प्रायो म्लेच्छदेशपरिव्रजनाभिनिवेशस्य कृतप्रयत्नतया

"न गच्छेन्म्लेच्छविषयमि" त्येतेन कीलप्रतिकीलन्यायाभिनियोज्यत्वमनुत्कटं निगद्यते।

न च "मेध्या वा आपः मेध्यो भूत्वा व्रतमुपायानि" आपः स्वभावतो मेध्या" इति श्रवणस्मरणाभ्यामप्सामान्यस्य श्रौतादिव्रतमात्रनिर्बर्हणयोग्यतापादकस्य निरङ्कुशमभिगम्यमानतया म्लेच्छदेशजलप्राशनमज्जनयोरकर्तव्यताऽभिलापक "परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छती"ति स्मृतेर्दौर्बल्याप्रामाण्ये इति साम्प्रतम् सलिलनिष्ठसांसिद्धिकपावित्र्यस्यानपनोद्यत्वेप्यौपाधिकाविलताया अपरिह्रियमाणतया तदभिप्रायप्रबोधिन्यास्तस्याः प्रामाण्यसबलतयोः सुस्थत्वात् स्वरूपैकसङ्कीर्तनप्रवणयोस्तयोरस्थाने संयोजनयोग्यताकानामुपेक्षणीयत्वाच्च तर्करसिकाणाम्। परनिपानेष्वित्यत्र परे च वैदिकधर्म्मानुष्ठानवैरायमाणास्तद्गर्हिताचारदुराग्रहग्रहा गम्यन्ते ते च म्लेच्छा एवार्थतः तदुपयोगदुर्म्मनायमानतया ब्राह्मणादीनामनुपादेयता तन्निपानानां न्याय्या।

न च "निपानमाहाव" इति जलाऽधारपरतायामाङ्पूर्वो ह्वयतिस्सम्प्रसारणाब्वृद्धीर्भजत इत्यर्थकात्पाणिनिस्मरणा"दाहावस्तु निपानं स्यादुपकूपजलाशय" इत्यभिधानाच्चाकृत्रिमसरित्सरोवरादिबहिर्भूतकृत्रिमजलाशयानर्थान्तरोपकूपनीरोपभोगनिन्दकमेव वाक्यमेतदिति शक्यं प्रतिपत्तुम् तद्गतजलाशयकार्त्स्न्यस्य म्लेच्छोपयोगपर्य्याप्तिकतया जलाशयसामान्यानुपादेयतोपलक्षकनिपानपदस्य स्वार्थैकनियोगपरताया निर्युक्तिकत्वात् तथात्वे च पदानामुपलक्षणचारित्वव्यवस्थानस्य दुःस्थतरत्वाच्च।

ननु "स्रवन्तीस्वनिरुद्धासु त्रयो वर्णा द्विजातयः। प्रातरुत्थाय कुर्वीरन्देवर्षिपितृतर्पणम्। निरुद्धासु न कुर्वीरन्नंशभाक्तत्र सेतुकृत्। तस्मात्परकृतान्सेतून्कूपांश्च परिवर्जयेदिति बौधायनस्मरणात्प्रवहन्नदीवारिनिर्वाह्यत्वमवगम्यमानं सद्ब्रह्मयज्ञादेः सेतुकृत्स्वकर्मप्र-

भवसुकृतराशिगामित्वस्य तदधीनोक्तनिजक्रियानिष्पन्नपुण्यांशस्य पर्य्यालोच्यतयैव स्वभिन्नयावन्मानवनिर्मातृकसेतुकूपादिसंपरित्यागस्य न्याय्यतया नात्र दुरभिमानयोजनस्य म्लेच्छविषयविद्वेषकृतस्यार्हतेतिचेद्बाढमेवम् तथाप्यविशिष्टव्यक्तिसंभावनायां निजवर्गीणानप्यपह्नुवानाः समन्ततोविधर्म्मसमन्वययोग्यतां प्रमाणसामान्यनिर्वापितां महर्षयः कथंकारमभ्युपगच्छेयुरित्यञ्जसैव चेतयितव्यत्वात् प्रकरणस्य वा म्लेच्छविषयपर्य्याशासानस्य निरावेशसमन्वयैकगमकस्यान्यथयितुमशक्यत्वाच्च एवं च दुरावेशपङ्कप्रदिग्धशेमुषीकैस्तत्पानीयाद्यादरभरैर्म्लेच्छाविष्टभूयो धर्मभागिभिर्भूयत एव ब्राह्मणादिभिः इत्थं चानिष्टम् इष्टानिष्टयोगवियोगचिकीर्षूणां कृतं प्रज्ञयेति तत्प्रवृत्तिविमुखीकरणबद्धपरिकरा भद्रङ्करी स्मृतिरेषा शरणीकरणीया।

ननु "स्मार्त्तो द्वितीय" इति बौधायनानुशासने नो"पदिष्टो धर्म्मः प्रतिवेद" मिति प्रतिज्ञावचनान्तरीयकेण स्वतः प्रमाणभावसङ्कुचितेनैव विवेचितार्थप्रतिष्ठानपर्यवसाने स्वतः प्रामाण्यपरिनिष्ठिताम्नायानुपन्यासानुपातिन्यूनतापरिजिहीर्षाकृते निगमगिरामुदाहरणीयताया युक्ततरत्वमिति नैष दोषः "धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्। अपि वा कर्म्म सामान्यात्प्रमाणमनुमानं स्यादि"ति पूर्वतन्त्रगतपूर्वोत्तरपक्षसूत्राभ्यामुपनिबद्धस्मृतिप्रामाण्याधिकरणनिर्णयाशयातिशयस्य प्रमादालस्यादिदोषदूषिताध्येतृप्रणालीदौर्भाग्यसमुत्सन्नवेदशाखान्तर्हृदयश्रुत्यर्थोपबृंहकतयैव स्मृतीनामनन्यथासिद्धत्वसम्भावनैकसम्पन्नस्य समाराधनीयत्वात् तथा चाम्नायते "अजान् ह वै पृश्नींस्तपस्यमानान्ब्रह्मस्वयम्भ्वभ्यानर्षत्तदृषयोऽभवन् तदृषीणामृषित्व"मिति अस्यार्थः अजान् कल्पादावेव ब्रह्मणा सृष्टा न त्वस्मदादिवत्कल्पमध्ये मुहुर्मुहुर्जायन्ते ततोऽजाः ते च पृश्नयः शुक्लाः स्वरूपेणै-

वाविद्यकमालिन्यहीनाः "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप" इति स्मृतिप्रमाणसिद्धसकलकरणोपशमनलक्षणं पुनस्तपस्तेपुस्तत्तपसा परितुष्यमाणं स्वयम्भुब्रह्मनिरतिशयजगत्कारणं परं ब्रह्म काञ्चिन्मूर्तिं धृत्वा तपस्यमानानृषींस्ताननुग्रहीतुमभ्यानर्षत् आभिमुख्येन प्रत्यक्षमागच्छत् तस्मात्ते मुनयः ऋष्धात्वर्थविषयत्वादृषयोऽभवन् ततोऽन्येषामप्यृषीणामनयैव व्युत्पत्त्या सम्पन्नमृषित्वमिति । स्मर्य्यते च "युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति गतोऽयमर्थः तत्रभवान्मनुरपि "अनाम्नातेषु धर्म्मेषु कथं स्यादितिचेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कित" इत्याचख्यौ अयमस्यार्थः "सत्सु निरतिशयप्रमाणभूताम्नायमुखेनानवधार्य्यमाणेष्वप्रायिकधर्म्मेष्वाकांक्षायां च किं प्रमाणगम्यता तेषामिति शिष्टब्राह्मणसिद्धान्तित एव निर्विचिकित्स इति निरर्गलं गम्यते शिष्टत्वं च ब्राह्मणेषु विशिष्टलक्षणलक्षीक्रियमाणत्वम् ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टा" इति पतञ्जलिचरणाः "शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिता" इति बौधायनपादाः। "धर्म्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतव" इत्यभ्यधायि तत्र भवन्मनुनापि। "न पाणिपादचपलो न नेत्रचपलो भवेत्। न चाङ्गचपलो विप्र इति शिष्टस्य गोचर" इत्यपि। "अथ यदि ते कर्म्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ताऽयुक्ताः अलूक्षा धर्म्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथा" इत्येवमाद्याः श्रुतयो बह्वयः आसामयमर्थः अथैवंवर्त्तमाने त्वयि यदि कदाचित्ते तव श्रौतस्मार्त्तव्यावहारिके च क-

र्म्मणि वृत्ते वा शिष्टाचरणपरिरक्षणलक्षणे विचिकित्साविशयः स्याद्भवेत्तदा तस्मिन्देशे काले वा वर्त्तमानाः सम्मर्शिनो विचारक्षमाः युक्ताः परिगणितकर्म्मस्वभियुक्ताः अयुक्ताः अपरप्रयुक्ताः स्वतन्त्रा इतियावत् अलूक्षाः अरूक्षाः अक्रूरविचाराः धर्म्मकामाः अदृष्टार्थिनः अकामहता इत्येतत् एवंलक्षणलक्षिताः ब्राह्मणाः श्रोत्रियाः शिष्टाचारानतिक्रमैकमतयो न त्वपरे ते तत्र दर्शितार्थेषु वर्त्तेरन् तदविरुद्धवर्त्तनैकनिरतस्त्वमपि भवेति परम आदेशोपदेशाभिसन्धिः अपि च "स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयमि"ति श्रुत्यैव प्रमाणविभागभागिन्या स्मृतिप्रामाण्यमाद्रियतेतराम् स्मर्य्यन्ते श्रुतिसिद्धार्था अनयेति स्मृतिरनुमेयश्रुतिमूलं मन्वादिशास्त्रम् १ प्रत्यक्षमुपाध्यायोपदेशमर्य्यादया परम्पराधिकारिवर्गाणां श्रोत्रेण गृह्यत इति श्रुतिः यद्वा हिताहितप्राप्तिपरिहारौपयिकालौकिकार्थाः श्रूयन्तेऽनयेति श्रुतिर्वेदः २ ऐतिह्यं महाभारतादीतिहासः ३ अनुमानः श्रुतिस्मृत्योरनु पश्चात्साक्षाच्छ्रुतिस्मृत्योरनुपलभ्यमानयोः श्रोत्रियादिपरम्परया तत्प्रतीतार्थो मीयते प्रमीयतेऽनेनेत्यनुमानः शिष्टाचारः तेन हि मूलभूतं श्रुतिस्मृतिलक्षणं प्रमाणमनुमीयते "आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो" इति याज्ञवल्क्यस्मरणाच्छिष्टाचारस्थानीयभोगविशेषानुग्राह्यत्वमागमस्यावगम्यते असति तत्प्रचारे आम्नायस्य निर्म्माल्यप्रायत्वात् सत्यप्यतज्जनप्रायिकप्रचारे तत्त्वेनैव तदाचरणस्य गर्हास्पदत्वादिति विपर्य्ययोऽवसेयः तदेतत्स्मृत्यादिचतुष्टयमवगतिहेतुभूतं प्रमाणं सदितरेतरसन्निधावन्योन्योपजीव्योपजीवकभावापन्नमन्यतमं तेषामवशिष्टप्रमाणकर्त्तव्यताप्रतिनिधितया प्रतिपित्सितार्थसमुद्धारसमर्थमेव युक्तमुत्पश्याम इति कृतमन्यादृशकल्पनाक्लेशपाशैः।

ननु माहिम्लेच्छदेशप्रयाणमहोद्यमाह्लादो मा च द्वीपान्तरपरि-

भ्रमणपरीरम्भसम्भ्रमः सहसा भूम्यध्वनासाक्षाद्भूतसमुद्रमार्गतो नौकया ननु विमानस्थानीयया तन्निर्वाहपरिप्राप्तौ का नो हानि-र्निजहानिप्रहापनैकमहाशयानामधुनातनानामितिचेद्धम्भण्यतां तावत्कामकारसदाकारैः परमत्र चिन्तावतारसन्तानत एव तदाश्रवप्रतिश्रवयोरुपभोक्ष्यमाणत्वान्न संप्रवृत्ताभिहासः साधुचरणः ।

यद्यपि । "समुद्रो नदीभिरुदक्रामत्तां पुरं प्रणयामि वः तामाविशत तां प्रविशत साघः शर्म्म च वर्म्म च यच्छतु १ तदुच्छ्रयस्व द्यौरिव समुद्र इवैध्यक्षत । २ अपः समुद्राद्दिवमुद्वहन्ति दिवः पृथिवीमधि ये सृजन्ति । ये अद्भिरीशाना मरुतश्चरन्ति ते नो मुञ्चन्त्वंहसः ३ प्रजापतिः सलिलादासमुद्रादाप ईरयन्तु दधिमर्द्दयाति ४ उदीरयत मरुतः समुद्रतस्त्वेषोऽर्क्को नभ उत्पातयाथ ५ योऽग्रतो रोचनानां समुद्रादभिजज्ञिषे । ६ दिवि जातः समुद्रजः सिन्धुतस्पर्य्याभृतः ७ समुद्राज्जातो मणिर्वृत्राज्जातो दिवाकरः ८ सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् ९ इरेव नोपदश्यति समुद्र इव पयो महत् १० कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविवेश ११ यासां द्यौः पिता पृथिवी माता समुद्रो मूलं वीरुधाम्बभूव १२ वाश्रा इव धेनवः स्पन्दमाना अञ्च समुद्रमवजग्मुरापः १३ उपजीका उद्धरन्ति समुद्रादधिभेषजम् १४ आर्द्रं तदद्य सर्वदा समुद्रस्येव स्रोत्याः १५ विद्म ते धाम परमं गुहाः यत्समुद्रे अन्तर्निहितासिनाभिः १६ अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः १७ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ततो रात्रिरजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधि संवत्सरोऽजायत १८ स एष पुरुषः समुद्रः सर्वं लोकमत्ति" १९ इत्येवमाद्याथर्वणबाहृचयाजुषादिस्थानिकमन्त्राः समुद्रपदोपलक्षितोच्चावचावष्टम्भसम्भारसध्रीचीनाः प्रधानस्वार्थयोगैकयोग्यताकप्रक्रमविशेषविधाना उपसर्जनाभ्युत्थानविद्योतितान्तरालक्रियावि-

णास्तात्वकतन्मानप्रख्यापनच्छटानिरस्तवस्त्वन्तरा भूतमातिकसज्ज-
नानुकूलविशिष्टोपयोगसमापन्नसंशीलाः तदपादानादिकारकास्ति-
त्वव्यापृतमहनीयकार्य्यापूर्वप्रादुर्भवनप्रतिष्ठानाश्च तत्रतत्र मुख्यगौ-
णाभ्यां प्रतिपद्यन्ते वृत्तिभ्याम्। प्रभूतेभ्यस्तावदुदाहरणप्रत्युदाहर-
णेभ्यो रूपकप्रतिसन्धानमविशिष्टमेव शश्वद्विधीयते च तथापि वि-
गृह्य व्याख्यानपरतायामुपक्रमपरामर्शोपसंहाराः पार्ष्णिग्राहस्थान-
स्थायितया विरूपार्थप्रत्याख्यानायाङ्गीकृतशरव्याः पराभावयन्त्येव
प्रतिद्वन्द्विन इति यथा भूतार्थविशदीकरणप्रतिभासङ्ग्रहणस्य वदन-
विसम्वदनादिवर्त्तनाविधुन्तुदस्य संख्यावत्स्तूयमानस्य सततमनु-
भावनीयत्वात्।

प्रकृते च समुद्रवन्ति समवेता ऊर्ध्वं द्रवन्ति गच्छन्त्यापो मरी-
चिभिराकृष्यमाणा इत्यादित्यमण्डलम्। समुन्निपातपूर्वाद्द्रवतेर्गत्य-
र्थादन्येष्वपि दृश्यत इत्यधिकारादपादाने डप्रत्ययटिलोपयोरूप-
मभिनिष्पद्यते समुद्र इति। १ यद्वा। संहता एवाभिद्रवन्त्यम्बूनि
भौमरसलक्षणान्यनिलप्रचोदितान्यादित्यमण्डलाद्वा वर्षासु कि-
रणैः प्रवर्त्तमानानीति समुद्रशब्दमेवंव्याचख्यावत्रभवान् यास्कः
समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोद-
न्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा इह हि समिति-
निपातो निरातङ्कवादी उदित्युपसर्गोऽभीत्यर्थवाची कर्म्मणि ड-
प्रत्यय इत्येष विशेषः २ सम्मोदन्तेऽस्मिन्भूतानि स्वचारीणीति
नीरधिपरमेवावगम्यते समुद्रपदम् संपूर्वान्मुदहर्षे इत्यस्माद्धातोः
"स्फायितञ्चिवञ्ची"त्यौणादिकाधिकारेणाधिकरणेरकि समो म-
लोपे च रूपमभिनिष्पद्यते ३ यद्वा समीत्येकीभावे उदकादुच्छब्दो रो
मत्वर्थीयः एकीभूतान्युदकान्यस्मिन्वर्त्तन्ते वर्षास्वित्युदकशब्दस्यो-
द्भावश्छान्दसः ४ अथवा "सम्पूर्वादुन्दी क्लेदने" इत्यस्माद्धातोः

"स्फायितञ्चिवञ्ची"त्यादिना कर्त्तरि रक्प्रत्ययेकित्वान्नलोपे च समुद्र इति संपद्यते समुनत्ति निजसत्तया भुवनमिति समुद्र इत्युदिताभ्यामुत्पत्तिभ्यां द्युमण्डलमहार्णवयोः प्रतिपत्तावाद्यस्य व्यवहितस्वरूपपर्य्यालोचनया तत्रतत्र प्रतिमानमात्रप्रयोजनवत्त्वेऽपि प्रस्तुतप्रवासलक्षणमहोत्साहयोग्यताकत्वाभावात्तदुपेक्षा । द्वितीयस्याश्च सागरव्यक्तेर्जगतीतलसदालम्बितया समाश्वसितार्थयोग्यतापादकत्वसम्भावनायामुरुतरवाणिज्यादिसंवर्द्धनैकफलकप्रयत्नवद्द्वीपान्तरीणमानवमहौन्नत्यपरामर्शप्रोत्साहमूलायां पाक्षिकसमृद्धेर्जिघृक्षानिरीक्षितस्य पाक्षिकनिर्ह्रासलक्षणविपत्तिहस्तग्राह्यस्य च प्रत्ययस्य सुमनोमनोमात्रप्रमितत्वात् उभयोर्बलाबलविचारणायामपर एव प्रधानफलभूमिक आपद्यते अदृष्टार्थप्रतिष्ठापनैकनिमित्तत्त्वात्प्रयत्नसन्तानस्य । न च दृष्टफलोपभोगप्रवृत्त्युपेक्षालक्षणधीमान्द्यमनपह्नुत्यात्यन्तपरोक्षफलोपादानलक्षणतृष्णामोदकायमानोदासीनभावेभ्यः स्पृहयेयुर्विचारकवरा जातुचिदिति वाच्यम् विरहय्यैव पृथग्जनानुभूतिभुवः पारीणसंवित्समारूढानेव भोगतराननुभावयमानानां मनीषातिशयस्य मनीषिमात्रविश्रान्तनिजसत्वस्य वस्तुस्थित्यनुयायित्वादीप्सिततरादृष्टार्थसमर्थनस्य पुमर्थपर्य्यवसायित्वा"द्भूतं भव्याय कल्पत" इति न्यायानुगमाच्च इतरथा तारतम्यप्रबन्धबन्धस्य प्रत्यर्थमनुविधायिनः समुच्छेद्यत्वापत्तेः तच्चादर्त्तव्यताभरमुपनिबध्नात्येव प्रतिप्रकरणम् सर्व्वस्यास्य प्रमाणमेव नेतृ । नतु मतिगतिः केवला । नापि सन्निहितसौख्यसमुचिता । नापि पुनरुदात्तमानवोदाहरणसंहता । न च नो दृष्टप्रयोजनप्रेर्य्यमाणानामदृष्टप्रयोजनौपयिकसरणिसमाश्रयणमप्रयोजकमेवासङ्गतिकनियोगनिन्दितत्वादिति वाच्यम् दृष्टादृष्टप्रयोजनयोरात्मनिष्ठप्रत्यासत्त्या समप्रवाहपरिपतिततयाऽयुतसिद्धतापरिसिद्धेः तयोः पुनरुपचयापचयोपस्थितावभीष्टतरस्याप्यन्यतरस्याफलप-

र्य्यवसायिनः परिरितित्याजयिषितत्वाच्च न कुत्रापि निर्भरसमाश्वास इति प्रेक्षावच्चेष्टाभेद एव प्रमाणम् ।

नन्वास्तां तावदेतदेवम् नहि तावता समुद्रविहारप्रमोदापनोद्यनिष्टापादकनिमित्तोपन्यासमृते तत्प्रत्याख्यानप्रक्रिया नन्वनुमोद्येतमतिमद्भिरिति अत्रोच्यते सागरविहारो नौयानसाधनैकसाध्यः तद्धि यद्यपि दारुमयं सन्ननैसर्गिकदोषभाग्गम्यते केवलं कैवर्त्तकादिसांसर्गिकदोषकर्दमदिग्धता ह्याधीयते तथापि न ते कैवर्त्तकादयः स्वजातिमात्रनिबन्धनाः प्रत्युत यवनादयस्तत्कार्य्यकरा भूयांसः अशनपानशयनादयस्तदीयायानैकनिकेतनाधीनाः यैः साक्षात्परम्परया च संसृज्यन्ते यानिकजनाः स हि संसर्गो मौहूर्त्तिको यामिक आह्निकः पाक्षिको मासिकादिर्वेति न शक्यते परिच्छेत्तुम् यावत्तदनुवृत्तिर्न्न तावत्ततो विशिष्टचरणासंसर्गिणः व्याप्यव्यापकभावकृतवैलक्षण्यलेशोपलब्धावपी "षड्वैषम्यमविवाक्षित" मित्येवार्थादापतेत् । तत्वतस्तु तन्निरूपितनिकर्षमापद्यमानास्तेभ्यो विशिष्टजन्मानोपि हीयन्त एव कर्म्मभिरित्यविवादम् तथा च स्वाचारतिलाञ्जलिरश्रद्धाम्भःसन्दोहदुरुद्धरः ॥

यत्तु प्राचीप्रतीच्यवाचीजलधिवेलासमधिष्ठितजनपदपुटभेदनस्थितिजुषामितरेतरसन्निकृष्टनगरीग्रामटिकाप्रवसद्ब्राह्मणादीनां नौकायानैकसमुपायानामभ्युक्तदूषणगणग्रस्ततायाः सार्वजनीनानुभवपथमधिरूढाया दुराधर्षणीयत्वे तज्जातीयदीर्घप्रवासविषयद्वीपान्तराभिगमननिरूढोपायभूतसमुद्रयानपरिग्रहस्य कथङ्कारमतौल्यानधिकृत्योः प्रतिपत्तिराक्षिप्येत द्वीपान्तरप्रस्थानेप्यवतरणप्रस्थानानां कतिपययोजनान्तरितविषयविशेषसन्निबद्धानां स्नानसन्ध्याद्याराधनपाकनिर्हरणानुकूलानां धार्म्मिकजनसेव्यमानयमनियमनिराबाधसन्धानानां तत्तन्मण्डलाधिपनिरातङ्काधिकाराधिकृतानां नियतत्वेन न निजधर्म्मानुष्ठानप्रलयप्रवादो द्वीपान्तरप्रवा-

क्तिसहोदराया नियामकत्वात् तयोरन्तःकरणधर्म्मतया बाह्यभूमि-
कासाहाय्यानपेक्षत्वाच्च साधुशैलीसंक्रान्तसामन्तमानवसमुच्चयस्य
मैत्रीकरुणापुरोगमगुणगणस्निग्धीभूतस्य समागमानन्दसुधारसस्य-
न्दिनः समस्तखण्डसंसदनत्वसम्भवेन न सुन्दोपसुन्दन्यायाक्षिप्त-
निजमण्डलीसौमनस्यमृते ह्यार्य्यवर्षवास्तव्यानामाभ्युदयविपाकः
सुगमः। दुरुच्छेददौर्मनस्यसारणीसमाप्लुतोद्यममहनस्य द्वीपान्तरो-
द्भूतमहार्घपदार्थदीप्तिघनवाणिज्यप्रच्यवनपात्रीभूतस्य चिरतरका-
लानुवृत्त्या सांसारिकसुखानुभवनमत्यन्तपरोक्षभूतमनुजानीमहि।
परप्रकर्षसाम्राज्ये चोदाहृतनिजापकर्षदौर्भाग्योपचायके प्रत्यक्ष-
मेवानुमोदेमहि। कमनीयकलाकलापवैदुष्यसामान्यहानमपि प्रमे-
यप्रस्थानसन्नहनप्रमादमयमशेषानर्थनिष्कुटमनुपदमनुभुञ्ज्महे। स-
त्यमेवमतिशयितवैमत्यानुधावकवाक्यजातमेव जगच्चर्य्याऽपरिनि-
ष्ठितस्वान्तोज्जीव्यायोग्यकल्पनाकमनवच्छिन्नसत्यसङ्गरस्थानीयत-
या श्रद्दधेमहि। एवञ्च वयमार्यावर्त्तवणिग्जनास्समन्ततो हता एव
द्वीपान्तरगमनाभ्यनुज्ञानमनापन्नाः प्रत्यर्थमधिकतरमौल्याङ्गीका-
रमहामोहपरिलम्भिता दृष्टतरप्रहाणिमसहमाना वातुलव्रातसमस्व-
भावाश्चाध्यास्महे स्वं स्वं गेहमिति किमित्येषा महती विपत्ति-
रिति। तत्प्रत्याचक्ष्यते तीरवर्त्तिजनपदपुरादिप्रस्थानम्प्रत्यल्पका-
लस्यैव विधीयमानतया "नतु तत्तीरवासिनामिति" स्मृतेर्नियतस-
मयनिष्पाद्यनिजधर्म्माचरणस्यार्य्यमण्डलैककर्त्तव्यताविशेषात्मनो
व्यतिक्रमणाप्रसक्तिमनुसन्दधत्याः प्रामाण्यमास्थाय दूषणानास्पद-
त्वे विप्रकृष्टतरद्वीपान्तरप्रयाणदीर्घकालयापनदुरपास्तधर्म्मव्यतिक्र-
मणमहाहानिप्रमुखवैलक्षण्यपर्य्यवेक्षयाऽतौल्यानधिकृत्योर्य्युक्तता-
याः प्रतीततरफलपर्य्यवसानायाः प्रतिसन्धातव्यत्वात्। १ उल्लि-
खितलक्षणानामवतरणप्रस्थानानामानुभविकत्वेऽपि तदधिष्ठिता-

र्य्यवर्णवर्गिणामवश्यानुष्ठेयब्रह्मकर्म्मभागैकसंसाधनयोग्यताकजलस्थलादिसामग्रीमृग्यताया नौकाऽऽरोहणवेलाविशेषमुपक्रम्य आर्य्यावर्त्तप्रत्यागमनमनुवर्त्तिन्याः प्रसाधितानुपपत्त्यनुविधायिन्या अविधूयमानत्वेन तद्व्यपाश्रिताक्षेपस्य कल्पनामात्रनिदानत्वान्निजधर्म्माचरणस्य श्रद्धाभक्त्यैकनियतत्वेऽपि प्रतिकूलानुकूलसामग्र्योर्विधेयानुत्पादोत्पादानुभाविकत्वस्य विभावनाविशेषार्हत्वादुद्दिष्टव्यवसायातिशयस्याननुभूतफलकत्वे निजधर्म्मापरिहार्य्यप्रभ्रंशप्राग्भारमहाफलस्य निजपरविचारणासमुत्तीर्णस्य निर्व्यग्रमापतितत्वात्कोन्वत्रव्याख्यातृव्यक्तीनामपराधः अबाधितार्थानुभूतिप्रायिकत्वात्तदादेरित्यनुसन्दधन्तु। २ सामन्तानामुदाहृतस्वरूपाणां दिशिदिशि भूयस्त्वे साङ्गत्यातिशयस्य वा तेषां व्यावहारिकफलाधिक्योपोद्बलकत्वेऽप्यविप्रतिपन्नसमागममहाप्रस्थानानामार्य्यचर्य्यासमनुसंहितप्रभूतपरार्थपर्य्याप्तानां परिष्कृतप्रमाणमीयमानानामेव प्रतिष्ठितत्वात्तदर्थताच्छील्यमन्यत्रादृष्टचरं सच्चातकजीमूतनैष्ठिकमैत्रीन्यायैकयायितया न सुन्दोपसुन्दन्यायसंघटनमप्रत्यूहनिजभावोपपन्नब्राह्मणादीनविषयीकुर्वद्विषयीकुर्य्यादेव स्थानिकस्वभावविशेषानन्यत्रेत्यास्तां तावत्। ३ आर्य्यावर्त्तवसतीनामनार्य्यक्षोणीमण्डलसम्भवद्वस्तुजातोपभोगैरुपभोगित्वनियमने विनिगमकाभावात् तदाद्युपभोगपरम्परायाश्चादृष्टाश्रुतचरत्वाद्भरतवर्षीयोपभोग्यवस्तूनां रसवीर्य्यविपाकादिसम्भराणामतन्यूनसत्ताकत्वसङ्कीर्त्तनानां त्रैकालिकप्रसूत्यापन्नस्वभावचञ्चरीकाणामव्यग्रतायामनिलसलिलाद्युपाधिकृतानेकव्यग्रतावगाहिद्वीपान्तरवाणिज्यवाञ्छाया औत्सुक्यमात्रनिर्वर्त्तनप्रयोजनाया अविचारितरमणीयतया तत्प्रक्रियाविशेषगोचरालापविलापधाराया निर्य्युक्तिकत्वात्। भरतखण्डीणवणिग्गणमत्यद्वैतस्य वा तत्रतत्र दुःसम्पाद्यत्वाद्द्वीपान्तरीणवाणिज्यविक्रमणस्य दारिद्र्यदौर्म्मनस्ययोरपग-

तानेकाकारकत्वस्य मौहूर्त्तिकवणिक्छिखामणिभ्यामनिर्णीतत्वाच्च । प्रातिस्विकविचारणाप्रघट्टिकानामकार्य्यकाराणामाशामोदकप्रायतयोपेक्षणीयतेत्यलं कल्पनापल्लवसमुल्लासैः ।

प्रकर्षनिकर्षयोः साम्राज्यदारिद्र्ययोः शुभाशुभकर्मफलभूतयोः "अचोद्यमानानि यथा पुष्पाणि च फलानि च । स्वकाले नातिवर्त्तन्ते तथा कर्म्मपुराकृतम् १ यथा धेनुसहस्रेषु वत्सो विन्दति मातरं । एवम्पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति । २ जीर्य्यन्ति जीर्य्यतः केशा दन्ताजीर्य्यन्ति जीर्य्यतः । चक्षुःश्रोत्रे च जीर्येते तृष्णैका न तु जीर्य्यति ३ या दुस्त्यजा दुर्म्मतिभिर्य्या न जीर्यति जीर्य्यतः । योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ४" इति महाभारतस्मृतिभ्यो विविच्य सम्प्रधारणीयतया कापुरुषपुरुषकारातन्त्रत्वाभ्यास्थाने सङ्ग्रहणीया स्वमतिरिति विबुधप्रवादः । "कलानामाकरः साक्षाद्विद्यानाम्परमोनिधि" रित्यादिवचनेभ्यः सकलकलाविलासमहामन्दिरतया भरतवर्षस्यैव त्रिलोकीविख्यातत्वे तद्गतकलातास्कर्य्यवद्द्वीपान्तरवैशारद्यवैशद्यादेः सम्प्रत्युच्चैस्तरत्वेपि भरतवर्षविषयीभूतप्रकृतिविशेषभागस्य सकलसन्दर्भसंस्तूयमानस्य निरस्तसमस्तापवादत्वात्तत्कलाकलापसंस्तवकृते न खण्डान्तरमभिगम्यम् । साम्प्रतिकतदीयकलाभेदानामन्यादृशमागलभ्यफलकत्वेऽपि न तत्त्वप्रतिपत्तये प्रसङ्गातिशयफलप्रदायिन्यै प्रवासः सूपपादः । गमनेऽपि परवशंवदयोग्यताऽऽसादनदुर्गमता च दुरपास्तैव परेषां कलाविशेषवितरणमहिम्नोऽनसूयितमप्रतिपद्यमानत्वाच्चेति वस्तुगतिः । इत्त्थञ्च विचारवैकल्यसमुद्भववदात्मभावैर्व्यतिक्रान्तार्य्यमर्य्यादाऽनवच्छिन्नप्रबन्धैर्निजात्वेशविशेषोपरोधकाप्ततरव्यक्तिभ्यः परं वैरायमाणैस्तद्विपर्य्ययप्रकृतिविशेषेभ्यः सदैव स्पृहयद्भिः "कीटाश्च पुरुषाश्चैव विरूपा व्याधितास्तथा । परद्वेष्याश्च मूर्खाश्च न तैर्धर्म्माः कृताः पुरा । एकदीर्घायुषः शूराः पण्डिता भोगिनस्तथा ।

अरोगा रूपसम्पन्नास्तैर्द्धर्म्माः स्युः कृताः पुरा" २। इत्यादि वृद्धगौतमाद्यानुशासनिकवचनाभिसन्धिमननुसन्दधानैः स्वकीयैः न तु स्वस्त्ययनप्रवादानभिव्याहरद्भिः परमोद्यमछन्धमानमात्मानमभिख्यापयद्भिश्चोत्प्रेक्ष्यमाणोहापोहसमूहध्रौव्यादिपर्य्यालोचनया न ते बुबुधिरे स्मृतिकर्तृमहर्षीणां "साक्षात्कृतधर्म्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्म्मभ्य उपदेशेन मन्त्रान्संप्राहुः—न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतुर्मुखः। तथैव धर्म्मस्मरणे मनुः कल्पान्तरान्तर" इति नैरुक्तपराशरादिवाक्यसम्प्रतीतप्रतिष्ठितगौरवाणां तत्परम्पराकाणाञ्च तन्मार्गैकसमधिष्ठितानां माहात्म्यलेशमपि। न वा मेनिरे तत्संप्रदायाधीनस्वपैतामहीं पूर्वपूर्वतरां सन्निष्ठाम्। अपि त्वधुनातनीमेवाविचारकपित्रादिश्रद्धार्धीमान्द्यसमधिष्ठितान्नुतामापेदिरे एवञ्चालेभिरे विप्रलम्भप्रवृत्तिभिरनुपलम्भनीयाभियुक्ततमजगत्स्थेमानमित्यनुपादेयवचना एवावधार्य्यन्ते। तथा चार्जनीयद्वीपान्तरवाणिज्यजन्यसम्पत्तिनिर्भरत्वे निरूपणीयद्वाराणां जागरूकतया तदन्यतमद्वारोपादानतो वा स्वसाक्षाद्द्वारवर्ज्यमभीप्सितार्थसंसिद्धिर्दैवबले भाविन्येवेत्यादिरनवस्थितशङ्कानां समाधिः।

केचित्तु भरतखण्डबहिर्भूताङ्गलद्वीपमण्डनायमानलण्डनमहाराजधान्यामेवेदानीन्तनसार्वभौमपदस्य प्रसिद्धतरत्वे तन्महापरिषदः पारिलमेण्टपदाभिधेयायास्तदवनीतलैकबंभ्राज्यमानायाः समस्तार्य्यवर्षमण्डलेशसामन्तसम्भावितानां प्रत्यासन्नसांसर्गिकव्यवहारपरिनिष्ठितपरिष्कारपयोदुहः शश्वत्परिसेव्यमानत्वे तारायन्त्रागमद्वाराभ्यां तदुद्धारसमाधानप्रक्रियायाः संजातप्रायत्वेपि निश्शल्यसमाधानविधानस्य मण्डलाधिपतन्मन्त्रिप्राड्विवाकप्रतिनिधीनां साक्षात्समवधानविवदनादिप्रयत्नमात्रसारत्वेन "सिविल्सर्विस" संज्ञकपरपरीक्षासमुत्तरणविधानव्यवस्थायाः संक्लृप्तवयोविशेषप-

रिलक्षितायास्तन्नगरीमात्रप्रतिष्ठितविद्यालयैकविषयतया तदुपाधिसमुत्क्रमानसानां ब्राह्मणादिवर्गीणविद्यार्थिसार्थानां तत्पुरीपर्यटननिर्वाह्यतायाः प्रतिबन्दितरत्वेन धनुर्वेदायुर्वेदादिप्रस्थानविन्याससम्भाराभिरक्तवैदग्ध्यस्य तत्रैव प्रेक्षावद्भिस्तथात्वेनैव संग्रहणीयत्वेन च तद्द्वीपाभिगमनमहारम्भो "राजा कालस्य कारणम्" अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः —ना विष्णुः पृथिवीपति" रित्यादिस्मृतिमहीकृतदर्शनीयसार्वभौमशुभावासपूतीकृतत्वे तद्द्वीपयात्रामैत्र्याः स्मृतिकारमहानुज्ञानगोचरतयाऽविप्रतिपत्तव्यः १ धार्म्मिकाग्रयाय्यर्जुनभीमसेनादिपाण्डुनन्दनानां राजसूयमहोत्सवौपयिकदिग्विजयप्रस्तावे "ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा। सुह्मानामधिपं चैव ये च सागरवासिनः। सर्वान्म्लेच्छगणाँश्चैव विजिग्ये भरतर्षभः एवम्बहुविधान्देशान्विजित्य पवनात्मजः। वसु तेभ्य उपादाय लौहित्यमगमद्बली। स सर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः। करमाहारयामास रत्नानि विविधानि च" "दिशं धनपतेरिष्टामजयत्पाकशासनिः। भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणां। प्रतीचीं नकुलो राजन्दिशं व्यजयतास्त्रवित् १ स तेन सहितो राजन् सव्यसाची परंतपः। विजिग्ये शाकलं द्वीपं प्रतिविन्ध्यश्च पार्थिवम् २ शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः। अर्जुनस्य च सैन्यैस्तैर्विग्रहस्तुमुलोऽभवत् ३ स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत्। अन्यैश्च बहुभिर्य्योधैः सागरानूपवासिभिः ४ वशे चक्रे महातेजा दण्डकांश्च महाबलः। सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ५ निषादान्पुरुषादांश्च कर्णप्रावरणानपि। ये च कालमुखा नाम नरराक्षसयोनयः ६ कृत्स्नं कोलगिरिं चैव सुरभीपट्टनं तथा। द्वीपं ताम्राह्वयं चैव पर्वतं रोमकं तथा ७ रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः। तान्सर्वान् स वशे चक्रे शासनादेव पाण्डवः ८ ततः सागरकुक्षिस्थान्म्ले-

च्छान्परमदारुणान् । पह्लवान्बर्बरांश्चैव किरातान् यवनान् शकान्"
९ इति प्रतीयमानाभ्यः किल महाभारतवचनव्यक्तिभ्यः । श्रीमद्विक्रमादित्यस्यापि दिग्विजयमहोद्यमप्रसङ्गतश्च "यस्याष्टादशयोजनानि कटके पादातिकोटित्रयं वाहानामयुतायुतञ्च नवतेस्त्रिघ्नाकृतिर्हस्तिनाम् । नौकालक्षचतुष्टयं विजयिनो यस्य प्रयाणेऽभवत्सोऽयं विक्रमभूपतिर्विजयते नान्यो धरित्रीधरः १ योरूमदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयिनीं समाहवे। आनीय सम्भ्राम्य मुमोच यस्त्वहो सविक्रमार्कः समसह्यविक्रम २" इति ज्योतिर्विदाभरणवाणीभ्याञ्च द्वीपान्तराभिगमनतत्रत्यहूणयवनादिराजचक्रमहाविजयादेरुद्घोष्यमाणतया समुद्रयानम्लेच्छविषयपर्य्यटनपुरोगमा निष्प्रत्यूहमध्यवसीयमाना एव व्यासङ्गा न नः किञ्चित्कस्मैचिदपचयाय पर्य्याप्तास्तदनुकृतिकृतसदाश्वासानां बत क्षोणीश्वराणामितरेषाञ्च तदुपजीविजनविशेषाणामशेषाणां वा यथायोगमिति नात्रापि शास्त्रातिक्रम इति प्रत्यवतिष्ठन्ते । तदेवं तत्त्वविदो न क्षमन्ते तथा हि साम्राज्यपदाधिकारतत्परिषदोर्लेण्डनप्रस्थमध्यस्थत्वे तत्प्रयोज्यशास्यार्थनिबन्धबन्धस्य वस्तुयाथात्म्यादिदशाविशेषरूप्यतायाः स्थिततरत्वे किं तत्रार्थनिरूपितन्यूनतायाः स्वाभीष्टाघटने हेतुता । १ उतानुवादकागमप्रयोगशैथिल्यसम्मीलितस्वपक्षविशेषस्य । २ अपि वा ग्राहकप्राड्विवाकादिप्रधानविवेचकदौर्लक्ष्यानुयोगिदैवविशेषस्य । ३ आहोस्वित्कक्षाऽप्रक्षीणयोग्यताधीननिरीक्षकविमर्शमोहस्य । ४ उत वादिष्वेव मण्डलाधीशादिष्वाकस्मिकानाकस्मिकामित्रभावस्य । ५ नाद्यः स्वपक्षगतदौर्बल्यस्य यथावद्व्यक्तीभवने तन्मात्रनिर्द्धारणस्यैव न्यायाऽकारतया अन्यायोपात्तसम्भावनाया अयोगात् । १ न द्वितीयः विवेक्तव्याऽर्थातिशयलक्षीकरणनिष्ठावदागमग्रामस्य विवक्षितार्थैकशरीरतया तन्मूलकपक्षप्रतनुताप्रकल्पनायाः सुतरामनन्वित-

विवादवादस्यानुभावित्वाच्च । २ न तृतीयः न्यायाविकृतदुरूहव्य-ञ्जनानुरञ्जितदैवस्य स्वनिष्ठदैवविशेषानिर्वाप्यतापरीतत्वात्समप्रकृतिकयोरेव प्रतिबध्यप्रतिबन्धकभावानुभावात् । ३ नापि चतुर्थः कक्षानिरूढयोग्यतायाः सुस्थत्वे प्रत्यनीकसामग्र्या अनारोहपात्रतायास्तादवस्थ्यात् तत्प्रसारे वा व्यामोहमात्रप्रादुष्करणे कक्षागतोल्बणसन्धैव सम्प्रतीयात् । ४ यादृच्छिकाद्यमित्रभावापत्तौ निमित्तान्तरस्य सम्पातायातस्य योजकतया तस्य प्रक्रान्तन्यायविग्रहासम्पृक्तशीलतरत्वात् प्रकारान्तरेण परिहारोपकरणविप्रकीर्णत्वाच्चेति न पञ्चमोऽपि । तथा च कतमेनापि कल्पेन निजेष्टनिर्द्वन्द्वपर्य्यवसानस्यान्तरायग्राहग्रस्ततया निरन्तरायोपायान्तरस्य फलतः परिशिष्यमाणस्य पर्य्यन्तप्रकरणागोचरतैवाऽपद्यते । तत्प्रापिपयिषासमाविष्टव्यक्तीनामानन्त्येऽपि तदुपायानुष्ठाननिर्व्यग्रनिष्ठाभूयिष्ठां न काञ्चिदनुजानीमहे विशेषुम् । तथाविधम्मन्यावाऽर्थैकदेशसम्प्रतिपन्ना अपि विप्रतिपन्नार्थव्यवहारिण एवार्थैकदेशे सम्मीयन्ते यदि तेच तान् लक्षीकुर्वाणाः प्रयतेरन् सम्बध्नीरन्नेव चिरेप्सितविचारणाऽऽकलितवस्तुपूगैः तन्महापरिषदि महता यत्नेन नोपस्थितिमतामप्यभ्युदितार्थमर्थयमानानामर्थपराभूतिरेवानुभाव्यमाना कथङ्कारं समवधानविवदनादिव्यापारमभ्युपेयात्फलवन्तम् । तत्राप्यमनोरथसिद्धावुत्तरोत्तरमुत्तराधरव्यापारधाराविषीदन्मनःप्रचारास्तत्र याता अप्ययातेतरमानुषसमाः सम्मीयन्ते । मण्डलेशादिपदभाजां किलैतस्याः पराभूतेः "सम्भावितस्य चाकीर्तिर्म्मरणादतिरिच्यत" इति स्मृतिसम्मितायाः का वाऽधिकतरा विपत्तिरित्यर्वाचीनजनापवादो दुरपास्तः । लाघवं चैषामेवमाद्यत्र च तद्द्वीपवासिष्वच्छैव प्रसृमरम् । परोक्षलाघवस्य प्रत्यक्षलाघवापेक्षया न्यूनसत्ताकत्वमानुभविकम् । तच्च विलम्बेन निजकार्य्य-

निर्वाणभाजनं सदविलम्बेन स्वकार्य्यनिर्वहणशीलस्य प्रत्यक्षला-
घवस्य प्रतिप्रत्ययमनुभूतिचरत्वाच्च। दशतयादिपक्षैकदेशविजय-
या च्छायामपि तदवयवबाहुल्यप्रसाधनप्रयुक्तपराजयजन्यापमानाप-
नोदनकृते प्रकृतप्रयत्नप्रधानाग्रहे च त एते मण्डलाधिपाः सानु-
भवम्पर्य्यनुयोक्तव्याः प्रथमं तावत्तथाहियेन्वद्यावधि द्वित्राः प-
ञ्चषा वा ययुर्लण्डनराजधान्यामन्यासु वा प्रान्तभूमिकासु भार-
तवर्षमाण्डलिकास्तदधिष्ठितपदाधिकारमर्य्यादायाह्यर्थतो रिरक्ष-
यिषया तद्गमनारम्भोऽनुमातव्य उत स्वेतरसामन्तजनसामान्य-
स्थित्यपेक्षया आहोस्विदुभाभ्यामप्युदासीनतया। न तृतीयः स्व-
पदानुकूलप्रयोजनतृष्णया प्रेर्य्यमाणानां गुरुतरकार्य्यभागसंरम्भा-
नामौदासीन्यस्यासम्भवतरत्वात्। न द्वितीयः "तत्स्थानापन्न-
स्तद्धर्म्मं लभत" इत्यादिन्यायप्रकोपात् परिनिष्ठितनिजमर्य्यादो-
ल्लङ्घनाच्च। २ नापि प्रथमः रिरक्षयिषायाः कर्त्तृत्वेऽपि तत्कर्मीभू-
तवस्तुपरिकरोपादानवैकल्यातिभारस्य दुर्वहतरत्वात् परिकरास्तत्र
स्वसत्ताऽनपहाराभिशाल्यभयसंवित्समाहारनिजराष्ट्रोपचितिमू-
लीभूतासाधारणषाड्गुण्यविभावनादयः तेचाचक्रवर्त्तिन आच म-
ण्डलाधीशेभ्यः समप्रकृतयः। उपसर्जनमुद्रयाऽसमशीलत्वेऽपि प्रधा-
नमर्य्यादया समशीलतैव सम्राण्माण्डलिकयोः राजयुवराजवन्म-
न्त्र्युपमन्त्रिवच्च। युवराज आराद्राजपदलिप्सयैव राजानमाजुषते
नतु यावज्जीवं यावन्निजपरम्पराञ्च युवराजपदैकप्रतिष्ठित्यै प्रेष्य-
भावाय च उपचयापचयवाचिककरणग्रामो हि तद्योगवियोगयोर्हेतुः
"उद्योगः साहसं धैर्य्यं बुद्धिः शक्तिः पराक्रमः। षडेते यत्र तिष्ठन्ति
तत्र देवोऽपि शङ्कते १ न साहसमनारुह्य नरो भद्राणि पश्यती"ति
प्रेक्षावतामत्र निगमस्थानीये एव स्मृती "असन्तुष्टो द्विजो नष्टः स-
न्तुष्ट इव पार्थिव" इत्यान्वीक्षिकी निगमश्च ततोऽप्यधिकतरसत्ताकः
विस्मृतप्रायाहीयं निजधामनिजकर्त्तव्यतयोरुद्दीपकदीपमाला ति-

रस्कृता च भूयस्येव निजान्वयबीजिपरम्परापरिपालितसुबुद्धसाधुरीतिः निर्द्धूता च दिवस्पृथिव्योः समुद्दीव्यदादित्यरोचिरतिंशायिमन्वत्रिमैत्रावरुणिपराशरपाराशर्य्यादिमहर्षिप्रणेतृकस्मृतिनिबद्धराजतन्त्रधर्म्मतन्त्रयोस्तत्त्वसङ्गतिरशेषतः तत्रापि पिदधत्येव केचिच्छ्रोत्रे श्रुतमात्रेणाक्षरद्वितयस्य श्रुतिरिति स्मृतिरिति धर्म इति वा बन्दिमागधभाट्टचारणास्तत्सभासु तत्त्ववेत्तारो महामुनयो वेदब्राह्मणादिसपत्नभूताश्च । वर्णेभ्यो वैरायमाणभृतकवाचाटाः पञ्चसप्तावरापरिषत् । समाह्वयद्यूतचतुरङ्गरमणादयस्समरमहोत्साहाः । एवमाद्यानन्दितचेष्टामात्रपर्य्याप्तनिजाधिकारचरितानां किमुत तेषां सभासु सभास्ताराणां तत्त्वनिर्णायकवार्त्तानां वा प्रत्याशा किमुत कृत्याकृत्यविमर्शचातुर्य्यसमुद्भूतनिजराष्ट्रसमृद्धिः किमुत तत्प्रयोज्यः परेभ्यः पराभूतिभयाविकम्पः किमुत तेषां व्यवहारधारान्यूनतापादकच्छिद्रानन्वीक्षाप्रयोजकाधिकारिणां—तथाच "सन्दीप्ते भवनेऽपि कूपखननं प्रत्युद्यमः कीदृश" इत्यारम्भिनाभिस्थूलेक्षिकयाऽपि निजावेशवासनावासिततद्द्वीपोत्सर्पणप्रकरणं हि सव्रणमेव किन्न स्यात् निर्व्रणं चेद्विचारव्रज्यासु दिङ्मात्रमुद्दारितासु प्रायोपवर्त्मप्रायासु किमित्यनाश्वासो विचारकजातीयानाम् । इत्थञ्च प्रतिरोधानुरोधसामग्रीकविचारणामहिम्ना तत्पुरीयातायातप्रयासयोरन्यूनानतिरिक्तसत्ताकलमृतेनादृष्टार्थातिशयः कश्चिदनुभूतिपदम् अपितु दृष्टानन्तानर्थकरी शिष्टाकोपविभागिनी हि माण्डलिकप्रस्थानकथा सती ज्ञेयैकदेशसिविल्सर्विस्चिकित्सककलाविशेषलाभोद्योगसंवीतानामार्य्यवर्षीयविद्यार्थिनामुदितकलालब्धिसमापनान्यथाऽनुपपत्त्या तन्नगरीगतिवसतिचरतिरूपा अपि व्यापारा नान्तरीयका एवायतन्ते प्राचीनपक्षोक्तदूषणगणानामवयवभेदानां परामृश्यमाणत्वात् । अवयवेषु केषुचिदतिदेशकल्पनायामनतिदेशप्रत्यासत्तेरन्ततः समस्वभावनिदा-

नायाः सूक्ष्मेक्षिकासंसरणीयता सुग्रहैव । न च तेषां क्षीरकण्ठोपकण्ठपरिणामानां विद्यापयःपानसमेधमानप्रतिभाऽतिफलानामपरामृष्टबहिर्विक्षेपपक्षाणामुदितदूषणावलेपो न मनागित्याकलनीयम् । आबाल्यमा च यौवनापवर्गमनवच्छिन्नतद्भूम्यावासतल्लोकनिबिडसाङ्गत्यादिभ्यः परम्प्रतिपन्थिभूतेभ्यः स्ववर्णादिनिरूढप्रबन्धबन्धप्रभ्रष्टगतिकत्वादेरवधार्य्यमाणत्वादुत्तरोत्तरमतिवेलमवधारयिष्यमाणत्वाच्च एवञ्च प्रतिभाविपाकस्य तदीयस्यैवमात्मतायां पारम्पर्य्यप्रजास्वरूपविलोप एवाभ्याशीभवति भविष्यति चेति न नो विवादः परिपाकसमीक्षावताम् । नच पुनरिहैव वसतामालस्यादिसमास्कन्दितकरणकारकाणामनास्वादिताक्षरमाधुर्य्यमात्राणामद्विपात्प्राणिचेष्टासमशीलानां स्वीयतावेशसमाहरणसमुपेक्षया प्रभ्रष्टेष्वेव विद्याविशेषजन्मसु तेष्वादरो "गुणामान्यस्थानं गुणिषु नच लिङ्गं नच वय" इति प्रामाणिकवचोऽनुगृहीतो महाजननेतव्यः साधीयानिति युक्तमादर्त्तुम् । विद्याजन्मनो विशिष्टादरणीयतावत्त्वेऽपि व्यावहारिकगुणानां व्यावहारिकमानपदभाक्त्वेऽपि पारमार्थिकमान्यतरगुणव्यामिश्रीकरणस्याभ्यर्हिततरस्यालक्षीभवनात् तेषुतु मान्यगुणविरहित्वसाक्षात्करणेऽपि निर्योग्यतावत्त्वमेव नतून्मार्गयोग्यताकत्वादीति विशेषः तत्रापि तथात्वे ततोऽप्यधिकतरोपेक्षाविषयत्वस्य नियतत्वात् । उदीरितकलाभ्यः सम्पादनीयाभ्यस्त्वेतरसाधारणाभ्य आर्य्यमाहात्म्यैकान्त्यसङ्गोपनौपयिकाः किलासाधारणकलाः सर्वतो विशिष्यन्ते । तदासादनाशक्तावपि तद्गोचरास्तिक्यनास्तिक्याभावयोः श्राद्धिकव्यवस्थापरपर्य्यायाङ्कुरस्थानीययोस्तन्मानवगतयोः पर्य्यालोचनयापि तदादरांशो ज्ञातव्यः । उदाहृतकलाफलांशभोक्तृत्वस्य कलावत्स्वेवाविभाज्यदायतया पर्य्यवसन्नत्वेन तददायिनामन्येषां तद्विषयोदासीनभावो नान्याय्यः । सामाजिकसुखसाधनानामेव सततक्रियानिर्वाहक-

तया सामाजिकैः साधारण्येनादर्त्तव्यत्वात् । नह्यत्र तदापत्तिः उक्तिमात्राभी रञ्जयितव्यत्वावगमात् । नापि सकलानां तत्कलाफलप्रेप्स्यत्वेऽकला एवाल्पतरास्तामिस्त्रागमनिर्गमाः पर्य्यायेण शुष्येयुः अनागतनिरीक्षायामतिमात्रनिमित्ताया मनोरथप्रायत्वात् प्राग्वदुत्तरकालमुक्तकलाभवनं भविता भरतवर्षमित्यत्र नहि किञ्चिच्चित्रम् । नहि भवितेति वा न कश्चिद्वदिता त्रिकालवेदी एतद्देशीया ह्येतत्कालीना एतावत्य एवंविधवीर्य्यविपाका इति न कुत्रापि कदाचित्केनचिन्नियन्तुं पार्य्यन्ते विभूतयः भगवद्भवसत्ताया अवाङ्मनसगोचरत्वादिति परमार्थः—इत्थञ्च माण्डलिकविद्यार्थिनोः पृथक्पक्षसमुत्थानेऽप्यनुगतसिषाधयिषासमभ्यञ्जितव्यूहविताना-तानविधानविधया विरूपोद्गमनभाषिकाभाव्यया वैजात्याभावसङ्क्हो न पृथक्प्रयत्नविशेषापेक्षीति समुद्रवाहनविहारम्लेच्छमेदिनीप्रस्थानप्रमुखा ह्यनुपादेया एव प्रयत्नाः पूर्ववत् । एतेन "राजा कालस्य कारण"मिति वाक्यस्य तत्तत्कालीनभूतजातनियतव्यवस्थानपरिपालनादिलक्षणसाक्षात्कर्त्तव्यतातिशयबोधकस्योच्छृङ्खलप्रवृत्तिप्रयोजकत्वं राजपदाभिधेयनिष्ठं नार्थः स्वच्छन्दप्रवृत्तिप्रसक्तौ नरेश्वरस्यापि "अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चाधिगच्छती"ति स्मृतेरकीर्त्तिनिरययातनयोः पात्रता गम्यते नातः परो दण्डः प्रथीयान् । "यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा । यो यत्र विहितो धर्मस्तत्र तं हि समाचरेत् । यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः । तथैव परिपाल्योऽसौ यदा वशमुपागतः । तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये । वर्त्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः १ सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्म्मतः २ अन्यायेनापि तं यान्तं येऽपि यान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तै-

नृप" ३ इति मानवाद्याः स्मृतयो निजहितान्यनभिसन्धाय प्रजाहितैकपरम्परापरिप्राप्तनियमयोजनपुरस्सरनिर्द्वन्द्वनिर्णयविधानार्हतां तत्फलवत्तामुद्वर्त्तने निर्वर्णितापत्तिं च प्रतिजानते ससभ्यस्य राज्ञः—न मनाङ्निरङ्कुशता खलु नरेन्द्रमहेन्द्रस्याऽपि । साङ्कुशताया आगःपरम्परासन्धायकत्वस्य परस्सहस्रनिदर्शननिरूढस्य सर्वत्रैव प्रतिबद्धत्वात् निरङ्कुशंमन्याः सत्तां वा कामयमाना निखिला एव स्वभावदोषविशेषमपेक्ष्य त्रिलोक्यामिति न केवलं भूभुजामेव तदावेशदोषावतारः समधिगतप्रजासङ्घसत्ताऽतिशयानाम् । परमेष तेषां स्वरूपहान्यापादकतया कलङ्कस्थानमेव सन्निजराज्योपचयशशाङ्कराहुर्वा प्रतीयेत फलतः ।

नच नोदीरितस्मृतीनामद्यतनहूणमहाराज्ञीपरानुशासनसंगोपितभरतवर्षीयवर्तनाप्रागल्भ्यपरामर्शतस्तदौपयिकमहानिबन्धविद्युत्प्रभास्वरूपालोचनतश्च निर्वापितप्रायतया तद्विषयविषयपरमाश्वासप्रतिपत्तिः कार्य्यकारिणी निरङ्कुशशासनानां नियोगपर्य्यनुयोगानर्हाणामनतिशङ्कनीयत्वादिति वाच्यम् । त्रैकालिकविभूतिभराणाममानुषप्रतिभागभस्तिपूतमन्वादिमहर्षीणामलौकिकतीर्थंकरता सर्वज्ञकल्पताभ्यामशेषराजन्यप्रबन्धप्रणेतृमूर्द्धाभिषिक्तत्वे समुपभुक्तजगच्चक्रबाह्यान्तरयाथात्म्यमहौजस्त्वे च तदाद्यसंख्यातसार्वभौमसमुपभुक्तसमस्तजगतीतलैकदेशयोग्यताकानामधुनातनमहाराजपदभाजामनुदाहरणभूमित्वादापातरमणीयत्वादयोगयोग्यत्वाच्च तथा च मनुमान्धातृसगरसहस्रार्जुनपरशुरामरघुरामादयो विक्रमार्कपर्य्यन्तास्ततोऽर्वाचीना अपि केचित्सर्वथैव त्रिलोकीदेदीप्यमानगुणप्रभावास्सन्तः तदधीतविद्यास्सुविद्याः तदधिगतकलास्सत्कलाः तदुपभुक्तभोगा अनीदृशाः । तत्प्रवर्त्तितवर्त्मानः स्वस्त्ययनाः तदाराधितमानवा महिमभुवः तत्परिपठितवेदाः परमार्थाः तन्निर्द्धारितधारणाः सत्राणाः तदुपेक्षितविषयाः सविषार्थाः तद्वा-

षितभाषाः सुभाषाः तन्निन्दितवाचो दुर्वाचः तद्गर्हितकर्म्माणि कुकर्म्माणि तद्भावितभावाः सुभावाः तद्रोपितगरिमा सुगरिमा तदुदीरितलाघवं परिलाघवं तदाकलितक्रियास्सत्क्रियाः तदनादृतनरा दुर्नराः तत्प्रशंसितशासनं सुशासनम् तन्निबद्धनिबन्धाः सुनिबन्धाः तत्सेविता नद्यः सुनद्यः तदध्यासिताः पर्वताः सुपर्वताः तदध्युषिता भूमयः सुभूमयः तन्निगृहीतव्यवस्था दुर्व्यवस्थाः तदलक्षीकृतभूतयः कुभूतयः तदालम्बिताचाराः सदाचाराः तन्निर्वर्णितवर्णाः सुवर्णाः तद्व्याख्यातशास्त्रार्थाः सुशास्त्रार्थाः तदनुज्ञातभक्ष्यभोज्यपेयानि सुपेयानि तत्प्रतिषिद्धान्नानि दुरन्नानि तदनुष्ठितधर्म्माः सुधर्म्माः तत्संपादितज्ञानं सुविज्ञानम् तत्सिद्धान्तिताखण्डार्थज्ञानमेव मुक्तिमूलम् तदाराधितदेवता एव परदेवता एवमादीन्यसाधारणलक्षणान्यभियुक्तताप्रयुक्तान्यध्यवसीयन्ते तद्धर्म्मिसमनुगतानि तदुच्छिष्टचर्वणावन्त एवोत्तरोत्तराः नत्वनुच्छिष्टचरं प्रतिपद्यते चिन्तयतां किञ्चित् । अचिन्तावतां तु भायादेव नाना न तच्चासम्पन्नसामग्रीकतया कस्यचिदर्थस्य प्रसाधनायालम् यतस्तथाविधैरप्रयोजनैरप्रमाणैर्वा भवितव्यमर्थानुवृत्त्या एवञ्च भिन्नकालिकप्रजानियन्तृत्वेनानधिकृताधिकृतत्वं नरेश्वराणाम् नहि कालेन परिच्छिद्यमानोऽर्थः कालस्य कारणं राजादिरितरो वा कालकार्य्यत्वाविशेषात् तस्माद्राजा कालस्येति वाक्यमुक्तार्थमास्थेयम् । "अष्टाभिश्च सुरेन्द्राणा" मिति तु दर्शितमहागुणगरिष्ठानां मनुरघुरामादीनामितरेषाञ्च तदाद्यविप्रतिपन्नविभूतीनां नैश्श्रेयसपदपर्य्यन्तसङ्गतीनामाभ्युदयिकीः सर्वा अपि वैदिकीः क्रिया निर्वर्त्तितवतामपर्य्याप्तकार्य्यसामान्यहीनानामेवानुवादकम् नत्वन्येषामापातगुणक्रियावतां सम्मोहनैकमार्गाणां कार्पण्याद्यपुरुषार्थसाधनसम्बद्धानामयतनानाम् अनाधेयातिशयगुणग्रामाणामाम्नायमौलिमन्दारसुमनःसौरभ्यसध्रीचीनानामपात्रत्वात् । यथाह श्रुतिः

"युवा स्यात्साधुयुवाऽऽध्यायिकः आशिष्ठो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्द" इति युवा प्रथमवयाः साधुयुवा युवाऽप्यसाधुर्भवति साधुरप्ययुवाभवतीति यूनो विशेषणमेतत् । आध्यायिकोऽधीतवेदः प्रधानसमस्तविद्योपलक्षणमेतत् आशिष्ठः आशास्तृतमः द्रढिष्ठः द्रढतमः बलिष्ठो बलवत्तमः संग्रामेष्वविकम्पितजेता परेषामितियावत् । एवमाद्याध्यात्मिकशक्त्यतिशयसम्पन्नतदाद्यनन्यसाधारणलक्ष्मणस्तस्य सर्वाऽपीयं पृथ्वी सकलसागरपर्य्यन्ता वशे वर्त्तमाना वित्तस्य वित्तेन "व्यत्ययो बहुल"मिति स्मरणात्षष्ठ्यास्तृतीया विपरिणतिः पूर्णा सम्पन्नेत्यर्थः । अतिवृष्ट्यनावृष्टिपुरोगमानामीतीनामुपरोधपुरस्सरं रसातिशयशाल्योषधिसमृद्धेतियावत् । उक्ताशेषलक्षणसम्पत्सम्पन्नमानुषानन्दफलभाक् सार्वभौमः आनन्दानन्दिनोरभेदविवक्षायाः प्रकृतत्वात् शतगुणाधिकमुत्तरोत्तरमानन्दमाब्रह्मणो यावन्निरतिशयानन्दसमधिगमस्तावत्तं प्रकृत्य श्रोत्रियत्वावृजिनत्वाकामहतत्वसहचरितधर्म्मानुष्ठानप्रकर्षमहिम्ना मानुष्यादानन्दाच्छतगुणेनोत्कृष्टमनुष्यगन्धर्वादिहिरण्यगर्भपर्य्यन्तक्रामिकानन्दाप्तिपूर्वकनिरतिशयब्रह्मानन्दपरिप्राप्तिः प्रस्तूयते । श्रोत्रियत्वावृजिनत्वयोर्नियतयोरकामहतत्वमसाधारणं श्वेतच्छत्रमिव सम्राज इति गम्यते उत्तरोत्तरमुत्तमोत्तमपदप्रापकत्वयोग्यताविशेषकत्वात् तथाच श्रोत्रियत्वादित्रितयोपनीतत्वमृते सार्वभौमानन्दोप्यदृष्टचरएवेत्यद्यतनयथोपन्यस्तमहाराजे विषयस्यास्य विचारस्सहत्वात् तच्चरणसरोजयुगीं जुषमाणेष्वास्यनिरीक्षकेषु माण्डलिकेष्वलं तदलीकसम्भावनया भरतवर्षीयेषु ।

सार्वभौमस्वरूपविशेषस्योक्तगत्या विवेक्तव्यत्वे तच्छेषभूतविचारणाभिरकृतविग्रहाभिरेव भवितव्यमिति कोन्वत्रावाग्मी । सति चैवं व्योमकमलिनीसौरभसमाघ्राणसम्पत्तये सोपानपरम्परानि-

र्म्मोणानुज्ञानवद्वीपान्तरीणनिरतिशयसौभाग्यभोगाय समुद्रयान-सन्ध्यादिहानमर्य्यादाम्लानपूर्वापमानविषयार्षानुज्ञानमचलं जज्ञ-न्यतां नाम । इदमेभ्यः कामं निजार्भकेभ्यो निर्देष्टव्यमेव किल यथेष्टाचरणं महर्षिभिः नते हन्त निरदिशन्नदूरदर्शिनः प्रातिनिय-तानन्तसाधनसाध्यभावविशेषस्वभावानभिज्ञानतयेत्येवंमन्यमानाः कथंताननुजानीयुर्यथाभूतव्यवस्थानिरूपकाः परशास्तारश्चेति वक्रगतिः तथा च तद्वीपयात्रादिन्न स्मृतिकारानुज्ञानविषये-त्यवधेयम् ।

सव्यसाचिमुखानाम्पाण्डवानामशेषमहीमण्डलगोचरो विजयः सम्प्रतिपन्नतर इत्यभ्युपगम्यते स हि साक्षात्समुद्रयानयवनविष-याभिगमनादिसाधनैकसाध्यः। सिद्ध्यति चानेन तदादेरुद्भवः त-थापि तयोर्निष्पादनप्रकारो विजिज्ञासितव्यः तद्विजयमहोत्साह-मूलश्च विजिज्ञासितव्यम् तत्कृतिसाध्यपरमापूर्वस्वभावश्च प्रत्ये-तव्यः—तथाहि "स्वाराज्यकामो राजसूयेन यजेते"ति विधिविहित-राजसूयमहायज्ञस्तत्र प्रस्तुतः स हि "द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभावित" इति भार-तस्मृत्याऽनुनिष्क्रान्ततरयोः प्रवृत्तिनिवृत्तिलक्षणयोः वैदिकमार्ग-योरन्यतरप्रवृत्तिपदजन्यबोधीयविषयताकोपस्थितसंस्थामहामणि-रैहिकसाम्परायिकनिस्सीमसौभाग्यजननः । एवञ्च लौकिका-लौकिकभूतिप्रकाण्डनियामकस्य यागस्यास्य दिग्विजयदृष्टप्रयोजन-गुणकतयोपसर्जनानुष्ठानकर्त्तव्यतायाः प्रकृतत्वे तदात्मनो विजय-स्योपजनापजनधर्म्मसहभाविनो वरुणालयविहारम्लेच्छविषयाभि-गमनसमरसन्नाहाद्यन्यादृशविन्यासवतोऽपि साधकतमत्वादेशतः प-रिग्रहात् । तेषां विजयक्रियाकर्म्मीभूताश्च सर्व एव नृपतिपदवाच्याः सन्तो व्यासज्यैव वशे नीयमानतया न पर्य्यायेण तत्तामर्हन्ति । व्यासज्यैव प्रयुज्यमानविजयक्रियाविषयत्वे कक्षाक्षय्यभुक्छलभ-

सम्पातनयेन यवनहूणादिभूपपटलीनामप्यानुषङ्गिकतया प्रधानप्रत्यासत्त्या किल साक्षात्सम्बद्धतया वा गृहीतव्यत्वेन न व्यस्तप्रयत्नापेक्षी यवनादिविजय एकक्रियासमङ्गभावापन्नत्वाद्व्यासज्यफलाभियोगव्याकीर्णानामनन्यसत्ताकत्वस्य स्थितत्वाच्च । विजयोद्योगव्यवसितमतीनां हि पाण्डवानां प्रकृष्टतमयागक्रियापरिचोद्यमानतया तपोमयमूर्त्तितया च निजधर्म्मानुपमर्दपूर्वं म्लेच्छदेशेऽपि निराबाधा स्थितिरासीदेवेत्यर्थसिद्धम् । सांग्रामिकसकलसम्भारसंयुतत्वे प्रधानसम्भाराणामसङ्कोचो निर्विवादः सेनादयोऽत्र सम्भाराः सैनिका हि प्रायः क्षत्रिया एव ते च लक्षशः कोटिशश्च संख्याताः नाल्पे कथञ्चित् समस्तास्ते शुचिशीलाः शुचिव्रताश्च नाणुतरमपि धर्म्मविलोपं सहमानाः शयनासनस्नानसन्ध्यादिनिजधर्म्मा न लोपिताः अभक्ष्यभक्षणं नोपात्तम् अपेयपानमनादृतम् जातिभ्रंशकरक्रियाणां प्रत्युत निग्राहकतया कथं तासामंशतो वा पुरःस्थितिः विजयिनां हि तेषां विक्रमैकस्वभावतया प्रधानधर्म्मांशे कथम्प्रमदनम् नौकाश्च स्वीयाः कैवर्त्तकाश्च भरतवर्षीयकैवर्त्तकजातीयाः क्षत्रियादिभिन्नजातीयानां भिन्ना एव नावो निवेशनाय शाकफलभक्षा एव नावि वर्णतः समानानामेव समवायो निजाङ्गणे असमानानामसम्पर्कः क्रियाकालेषु भक्ष्याद्यर्थाः समुचितविन्यासाः पानीयं च यथोक्तमर्य्यादम् अवतरणस्थानान्यन्तिकान्तिकतराणि सलिलाशयाश्च स्वायत्ताः प्रत्युत स्वाधीनखननाश्च यतो निजधर्म्मा निरन्तराया उन्नेयाः म्लेच्छाद्यावसथेष्वनावासः तदुपभुक्तकूपादयस्तुतरां नोपभुक्ताः जनपदनगरादीनां प्रान्तभूमिकासु नियतवसतयः तत्रत्योपादेयधान्यादय एवोपभुक्ताः तत्कृत्यानुकृतिर्नाकारि तद्गौरवधिषणा नाग्राहि एवमनुकूलाचारैकचारितया दुराचारसंश्लेषलवोऽप्यकृतस्थानः धर्म्महानिशङ्का अप्यनवकाशाः नियतिबाधकाक्षेपा अप्यस्थानिनः

नीतिहारकवृत्तियोगानिरागारा: दोषदायकदु:स्थितयो दुरूहा: वेषरोषकविकल्पा अप्यकल्प्या: बुद्धिभेदकपारवश्यञ्चानाश्रयमित्यादयोऽप्युचिततरमहत्ताकपाण्डवानां समुद्रयानम्लेच्छविषयाभिगमनतद्विषयपर्य्यटनकालीन यथोक्तस्थितिगतिपर्य्यालोचनया प्रभूतप्रभुत्वौपयिकामानुषशौर्य्यवीर्य्याद्युज्जृम्भिततया च तेषां सर्वतोव्यावृत्तस्वरूपविशेषत्वेनानुदाहरणतरत्वात् । संज्ञयाऽविरूपार्थप्रतिपत्त्यवभासे वस्तुत: पाण्डवादीनां विक्रमादित्यपर्य्यन्तानां राज्ञां प्रधानयज्ञोद्देशतदुपसर्ज्जनीभूतविजयोत्साहसमुद्रयानम्लेच्छदेशप्रस्थानादीनामन्यादृशस्वरूपाणां धर्म्मप्रच्यवनशङ्कापराहतानामनुसन्धातव्यतरत्वे च तदादौ किमिति तदधिष्ठितत्रिलोकीरोरुच्यमानतपोविभवदिव्यास्त्रविद्याविभूतीनामनन्यलभ्यानां नोदाहरणता विशिष्टप्रतीतेर्विशेषणविशेष्यप्रतीतिपूर्वकत्वनियमात् । नहि नीलादिविशेषणप्रतीतिमुपमृद्य विशिष्टोत्पलादिकं स्वरूपत: कुत्रचित्प्रतिपद्येमहि प्रतिपद्यमानं वा सत् स्वेतरव्यावृत्तियोग्यताभाववत्त्वमपबाधेमहि । न पश्चात्तना विक्रमादित्यान्म्लेच्छदेशगमनमादृतवन्तो बाहुजा: गतवन्तोहि प्राञ्चो महाराजा एव विजयार्थं ससैनिका: तदप्युदाहृतप्रसङ्गसजातीयमुपाददाना: साक्षाद्विजयक्रियाविधानमातन्वतेस्म इतिकर्त्तव्यताविशेषमनुजिघृक्षन्त: कल्पान्तरप्रसक्तिमापातप्रयोजनवतीं प्रतिसन्दधाना यथासम्भवमाचरन्तिस्म उदासतेस्म च धर्म्माभ्युदयाभ्युच्चयापनोदिसङ्गत्यपेक्षया यतस्तदभ्युच्चयैकत्रैकालिकफलोपजीव्या: सर्व एवैते यथोपपन्नवर्णाश्रमाचारनिष्कृष्टपरिपालनायत्तकरणत्रयाश्चानुचरमनुजाश्चाराश्च तदीया: नतु जग्मुर्ब्राह्मणा विशिष्टलक्षणा: सामान्यलक्षणा वाऽभियुक्तनियुक्ता: । अभियुक्तेतरनियुक्तनानाकर्म्माणो जघन्ययोग्यतामेवापन्ना न निग्रहानुग्रहव्यवस्थामर्हन्तिस्मेति ते तु नोदाहार्य्या: यतो विप्रतिषिद्धचेष्टाविशिष्टा: शिष्ट-

मर्य्यादा अतिशेरतेस्म । तादृशमानुषपर्य्यटनविषयजम्ब्वादिभेदभिन्नद्वीपान्तरवर्त्तिजनपदादिष्वावाससुवासकुवासप्रयुक्ताः किलाख्यायिकाविशेषाः साम्प्रतिकाऽर्य्ययवनहूणादिभेदभिन्नशोधकजनोदाहृतेभ्यो ह्यैतिह्येभ्योऽवगम्यन्ते उदाहरणप्रत्युदाहरणैस्तेषु विश्वासातिशयमुत्पादयन्तः प्रगल्भन्ते च । परमत्र यथोपन्यस्तलक्षणानां किल मानवानां चातुर्वर्ण्यान्तर्वर्त्तितया प्रकृतत्वेपि न तद्गोचराख्यायिकाकलापाः स्थितं न्यायं बाधितुमुत्सहन्ते लिङ्गानि हि केवलान्याभाससहकारिसाधनसहस्रैरार्य्यव्यवहारच्छायानुवर्त्तनमापादयन्ति सन्ति न शक्तानि विशिष्टार्थमेकं वासद्धेतुसम्पादनाधीनमनुकूलस्मरणाद्युपेतमनुभावयितुं विचारकविचारणापेक्षया ।

नच पुनः पुरातनचक्रवर्त्तिवेलास्वापन्नप्रसङ्गवशान्नु चीनारबस्थानपारसीकादिषु यथोदाहृताऽऽर्य्यवर्षीयतया ब्राह्मणादिजातीयतया चोल्लिखिताभिधानवतामधिगतव्यक्तिविशेषाणां कतिपयदेशीयग्रामेषु शिवालयशिलाफलकताम्रफलकादिचिन्हेभ्योऽस्मार्त्तकालीनावासातिशयस्य तद्देशेषु व्यक्ततया समुद्रयानद्वीपान्तरगमनाद्यनाधुनिकमाचारासिद्धं चेति वाच्यम् । अस्थितोदाहरणविशेषाणामवभासयितव्यत्वेऽपि स्थिततरोदाहरणविशेषस्य मृग्यतेत्युक्तोत्तरत्वादन्वयव्यतिरेकाभ्यामुदितयानगमनयोरन्याय्यताया असकृदावेदितत्वात्पाण्डवादिविषयदृष्टान्तभेदस्य राजसूयादीतिकर्त्तव्यताविशेषप्रयोज्यात्यासन्नविजयक्रियाम्प्रत्यभ्युपायमात्रतया "यावद्वचनं वाचनिक"मिति तज्जातीययोग्यतावतामेव तयोरधिकृतत्वाच्च । न चाञ्जसैव महायज्ञाङ्गतयाऽऽप्यत्वे वैदिकत्वस्यैव प्रतिपत्तिक्रियावदास्थेयत्वे च तयोर्वैधत्वमर्थप्राप्तमेवेति किमिति मुधावाग्वादो विबुधानामपीति वाच्यम् सर्वस्यास्य यथोक्तमहायज्ञाङ्गतयेष्टापत्तेरितरत्रैव तयोरप्रामाणिकत्वात् ।

ननु भुज्युप्रभृतीनां राजर्षिकुमाराणामितरेषाञ्चोपादेयचरितानां रत्नाकरयानद्वीपान्तराभिगमनयोः "तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः । तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षपृद्भिरपोदकाभिः १ तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः । समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः २ अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे यदश्विना । ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम्" ३ इत्याद्याभिरृग्भिर्विस्पष्टप्रतीतिगोचरतया वैदिकत्वमपरिहार्यमिति चेन्मैवम् । अश्विनीकुमारतदभिध्यातृभुज्य्वादिमाहात्म्याभ्युच्चयैकप्रतिपादनपरत्वादृचां हि तासाम् । नचामूषां संहितान्तरालवर्त्तितया माहात्म्यमात्राभ्युपगमे "वनस्पतयस्सत्रमासत । सर्पाः सत्रमासते"त्यादिवत्स्तुतिपरिपाकायमाणप्ररोचनामात्रकर्त्तव्यताज्ञापकतया स्वतःप्रामाण्याभावबलेनार्थवादवाक्यतायाः सिद्धत्वेच न वैतानिकासु क्रियासु विनियोगविशेषः कल्पसूत्रप्रणेतृको न्याय्य इति युक्तमभिधातुम् । वनस्पतयस्सत्रमासतेत्यादीनां वनस्पतयो नामाचेतनास्सत्रमुपासितवन्तः किम्पुनः श्रोत्रिया अनूचाना इत्याद्यन्यादृशप्ररोचनानिर्वाहकताया युक्तत्वेऽपि "वायुर्वै क्षेपिष्ठा देवते"त्याद्यर्थवादवाक्यानां यद्यपि क्रियाप्रवर्त्तकताऽवगम्यते क्रियासम्बद्धत्वं वा किञ्चित् तथापि "वायव्यं श्वेतमालभेत भूतिकाम" इति सन्निहितविध्युद्देशेनैकवाक्यतामापन्नानामन्यादृशस्वभावतयैवोपपत्त्या यथोक्तप्रयोगविशेषाणामारूढतयैवोपपत्तेः। एवञ्च भुज्युकर्त्तृकसमुद्रयानयोग्याख्यायिकाया ऋग्विशेषसम्प्रतीतायाः कथंचिद्यथोक्तदिशा युक्तत्वसम्भावनायामपि न वैधतया ग्रहणार्हत्वमुपपद्यते चोदनाया असम्भवात् "चोदनालक्षणोऽर्थो धर्म" इत्येव धर्मस्वरूपावधारणाच्चोदनाविरहवत्त्वमधर्म्मताया एव नियमने तन्त्रम् । ऋचाञ्च तिसृणामैदम्पर्यलक्ष-

णमास्थायैव व्यवस्थानमथोप्याद्दतान्वयद्रढिम्नेऽवगमयितव्यस्स यथा "तुग्रो नामाश्विनोः प्रियः कश्चिद्राजर्षिः सच द्वीपान्तरवर्त्तिभिश्शत्रुभिरत्यन्तमुपद्रुतः सन्तेषाञ्जयाय स्वपुत्रं भुज्युं सेनयासह नावा प्राहैषीत् । साच नौर्मध्ये समुद्रमतिदूरं गता वायुवशेन भिन्नाऽऽसीत् तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव तौ च स्तुतौ सेनयासहितमात्मीयासु नौष्वारोप्य पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुः । अयमर्थः इदमादिकेन तृचेन प्रतिपाद्यते हशब्दः प्रसिद्धौ तुग्रः खलु पूर्वं शत्रुभिः पीडितः सन् तज्जयार्थमुदमेघे उदकैर्मिह्यते सिच्यत इत्युदमेघः समुद्रः तस्मिन्भुज्युमेतत्संज्ञम्प्रियम्पुत्रमवाहाः नावा गन्तुम्पर्यत्याक्षीत् । तत्र दृष्टान्तः ममृवान् म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यो रयिं न यथा धनम्परित्यजति तद्वत् हे अश्विनौ तञ्च भुज्युम्मध्येसमुद्रं निमग्नं नौभिः पितृसमीपमूहथुः युवाम्प्रापितवन्तौ । कीदृशीभिः आत्मन्वतीभिः आत्मीयाभिः युवयोः स्वभूताभिरित्यर्थः । यद्वा धृतिरात्मा धारणवतीभिरित्यर्थः । अन्तरिक्षपृद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः अपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिः अप्रविष्टोदकाभिरित्यर्थः १ हे नासत्यौ सेनयासहोदके निमग्नम्भुज्युं तिस्रः क्षपाः त्रिसंख्याका रात्रीस्त्रिरहस्त्रिवारमावृतान्यहानि चातिव्रजद्भिरतिक्रम्य गच्छद्भिरेतावन्तं कालमतिव्याप्य वर्त्तमानैः पतङ्गैः पतद्भिस्त्रिभिस्त्रिसङ्ख्याकैः रथैरूहथुः युवामूढवन्तौ । केतिचेदुच्यते समुद्रस्याम्बुराशेर्मध्ये धन्वन्धन्वनि जलवर्जिते प्रदेशे आर्द्रस्योदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च । कथम्भूतै रथैः शतपद्भिः शतसङ्ख्याकैश्चक्रलक्षणैः पादैरुपेतैः षळश्वैः षड्भिरश्वैर्युक्तैः २ हे अश्विनौ अनारम्भण आलम्बनरहिते समुद्रे तत्कर्मावीरयेथा विक्रान्तं कृतवन्तौ युवां । अनारम्भणत्वमेव स्पष्टीकरोति अनास्थाने आस्थीयतेऽस्मिन्नित्या-

स्थानो भूप्रदेशः तद्रहिते स्थातुमशक्ये जल इत्यर्थः । अग्रभणेऽग्रहणे हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन्नित्यर्थः । किम्पुनस्तत्कर्म्म भुज्युं समुद्रे मग्नं शतारित्रां बह्वरित्रां यैः काष्ठैः पार्श्वतो बद्धैर्जलाऽऽलोडने सति नौश्शीघ्रं गच्छति तान् परित्राणि ईदृशान्नावमातस्थिवांसमास्थितवन्तमारूढवन्तङ्खलाऽस्तङ्गृहनामैतत् पितुस्तुग्रस्य गृहम्प्रति यदूहथुः तत्प्रापणमन्यैर्दुश्शक्यं युवां समुद्रमध्ये कृतवन्तावित्यर्थः ३ अन्यैरपि भुज्युविजातीयकामनावद्भिः पेदुकक्षीवद्गोतमात्रिच्यवनवन्दनादिमहर्षिभिरभिध्यातृभिरभ्यर्थितावश्विनौ तज्जातीयानुग्रहविशेषैरनुगृहीतवन्तावित्युत्तराभिः प्रतिपाद्यत एवर्ग्भिस्ता यथा "यमश्विना दधथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति। तद्वां दात्रम्महिकीर्त्तेन्यम्भूत्पै द्वो वाजी सदमिद्धन्यो अर्यः १ युवन्नरा स्तुवते पज्रियाय कक्षीवते अरदत्तम्पुरन्धिम् । कारोतराच्छफादश्वस्य वृष्णः शतङ्कुम्भां असिञ्चतं सुरायाः २ हिमेनाग्निं घ्रसमवारयेथाम्पितुमतीमूर्ज्जमस्मा अधत्तं ऋबीसे। अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ३ परावतन्नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मवारं। क्षरन्नापोन पायनायण्ये सहस्राय तृष्यते गोतमस्य ४ जुजुरुषो नासत्योतवव्रिम्प्रामुञ्चतं द्रापिमिव च्यवानां । प्रातिरतञ्जहि तस्यायुर्दस्रादित्यतिमकृणुतङ्कनीनाम् ५ तद्वां नराशंस्यं राध्यञ्चाभिष्टमन्नासत्यावरूथं । यद्विद्वांसा निधिमिवापगूळ्हमुदर्शतादूपथुर्वन्धनाय ६ तद्वांनरासनयेदं स उग्रमाविष्कृणोमि तन्यतुर्नवृष्टिं । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रदयीमुवाच" ७ आसामयमर्थः पेदुर्नामकश्चित्स चाश्विनौ तुष्टाव तस्मै प्रीतौ कश्चिच्छ्वेतवर्णमश्वं दत्तवन्तौ स चाश्वस्तस्मै मौढञ्जयश्चकारेति एतदत्र प्रतिपाद्यते । हे अश्विनौ युवाम्मघाश्वाय हन्तव्याश्वाय पेदुनाम्ने राजर्षये यं श्वेतवर्णमश्वं ददथुः दत्तवन्तौ सोऽश्वस्तस्मै स्वस्ति जयलक्षणम्मङ्गलं शश्वदित् नित्यमेव चकार । वां

कीर्त्तनीयम्प्रशस्यम्भूत् अभूत् तस्मात् पद्वः पदाः सम्बन्धी पतन-
शीलः शीघ्रगामी वार्यः शत्रूणाम्प्रेरयिता युद्धेषु प्रेरयितव्यो वा
वाजी वेजनवान् सोऽश्वः सदमित् सदैव हव्योऽस्माभिरथाह्वा-
तव्यः १ कक्षीवान् ऋषिः पुरातमसा तिरोहितज्ञानस्सन् ज्ञाना-
र्थमश्विनौ तुष्टाव तस्मा अश्विनौ प्रभूतां धियं दत्तवन्ताविति तदाह
हेनरा नेतारावश्विनौ युवं युवां पज्रियाय पज्रा इत्यंगिरसामाख्या
"पज्रावा अंगिरस" इत्याम्नातत्वात् तेषां कुले जाताय कक्षीवते
कक्ष्या रज्जुरश्वस्य तद्वते तत्संज्ञाय स्तुवते युवयोः स्तुतिं कुर्वते म-
हाम्पुरन्धिम्प्रभूतां धियं बुद्धिमरदत्तं व्यलिखतं यथा सर्वार्थगो-
चरा भवति तथा कृतवन्तावित्यर्थः। अपिच कारोत्तरात् कारो-
त्तरोनाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन्सुरायाः स्रावणं
क्रियते लुप्तोपममेतत्। कारोत्तराद्यथा सुरायाः सम्पादकास्तान्
स्रावयन्ति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयाश्वस्य श-
फात् खुरात् सुरायाः शतं कुम्भान् असङ्ख्यातान् सुराघटानसि-
ञ्चतं अक्षारयन्तं। यद्वा सिञ्चतिः पूरणार्थः कारोत्तरस्थानीया-
द्युष्मदीयाश्वखुरात् या सुरा प्रवहति तयाऽसङ्ख्यातान् घटानसि-
ञ्चतं अपूरयतं ये जनाः सौत्रामण्यादिकर्म्माणि युष्मद्यागाय सुरां
याचन्ते तेषामित्यर्थः २ अत्रिमृषिमसुराः शतद्वारे पीडायन्त्रगृहे
प्रवेश्य तुषाग्निना बाधिषत तदानीं तेन ऋषिणा स्तुतावश्विनाव-
ग्निमुदकेनोपशमय्य तस्मात्पीडागृहात् अविकलेन्द्रियवर्गं सन्तं नि-
रगमयतामिति तदेतत्प्रतिपाद्यते हे अश्विनौ हिमेन हिमवच्छीतेनो-
दकेन घ्रंसन्दीप्यमानमत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निमवारयेथां
युवां निवारितवन्तौ शीतीकृतवन्तावित्यर्थः। अपि च अस्मा असु-
रपीडया कार्श्यं प्राप्तायात्रये पितुमतीं पितुरित्यन्ननाम अन्नयुक्त-
मूर्ज्जं बलप्रदं रसात्मकं क्षीरादिकमधत्तं पुष्ट्यर्थं प्रायच्छतं ऋ-

वीसेऽपगतप्रकाशे पीडायन्त्रगृहेऽवनीतमवाङ्मुखतया सुरैः प्रापितमत्रिं सर्वगमं गणं गणः समूहः सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः तस्माद्गृहादुद्गमय्य युवां स्वगृहम्प्रापितवन्तौ । यद्वा हिमेन शीतेन वृष्ट्युदकेनाग्निमग्निवत्तीक्ष्णं घ्रंसं अहर्नामैतत् सामर्थ्यान्निदाघकालीनमहरवारयेथां तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ । अपिच अस्मा अग्नये पितुमतीश्चरुपुरोडाशादिलक्षणान्नोपेतमूर्ज्जम्बलकरं रसात्मकमुपस्तरणाभिधारणात्मकं घृतमधत्तं वृष्ट्युत्पादनेनाग्नेयार्थं हवींषि निष्पादितवन्तावित्यर्थः । ऋबीसेऽपगततेजस्के पृथिवीद्रव्येऽवनीतमोषधीनामुत्पादनायावस्तान्नीतं पार्थिवाग्निना परिपक्वावुदकेन क्लिन्नाद्योषधिवनस्पतयो विरोहन्ति अत्र हविषामत्तारमोषधिवनस्पत्यादीनां वा एवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ युवां स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ कारणात्मना पार्थिवाग्नौ वर्त्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रकर्षेण व्यक्तीकृतवन्तावित्यर्थः । अयम्पक्षो यास्केन "हिमेनोदकेने" त्यादिनोक्तः ३ कदाचिन्मरुभूमौ वर्त्तमानस्य स्तोतुर्गोतमस्यर्षेः समीपं देशान्तरे वर्त्तमानं कूपमुत्खायाश्विनौ प्रापयतां प्रापय्य च तं कूपं स्नानपानादिसौकर्य्यायोपरिमूलमधोबिलमवस्थापयतामिति तदेतदाह—हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा एतत्संज्ञावश्विनौ युवामवतं कूपनामैतत् अवस्तात्ततं कूपं परानुदेथां गोतमस्यर्षेः समीपे प्रेरिषाथां तदनन्तरं तं कूपमुच्चाबुध्नं उच्चैरुपरिष्टाद्बुध्नो मूलं यस्य स तथोक्तः जिह्मवारं जिह्मधस्ताद्वर्त्तमानं तथा वक्रं वारं द्वारं यस्य स तथोक्तः एवंगुणविशिष्टं चक्रथुः युवामकृषाथां तस्मात्कूपात् तृष्यते पिपासतो गोतमस्य पायनाय पानार्थमापोन आपश्च अयं नोशब्दश्चार्थेऽक्षरं प-

वाहरूपेण निरगमं । कीदृशस्य राये हवींषि दत्तवन्तः सहस्राय सहनशीलाय यद्वा सहस्रसङ्ख्याकाय राये धनाय एतत्सङ्ख्यधनलाभार्थं चाक्षरम् ४ वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तः च्यवनाख्य ऋषिरश्विनौ तुष्टाव स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्य्यौवनमकुरुतामिति तदेतदाह हे नासत्यावश्विनौ जुजुरुषो जीर्णात् च्यवनात् च्यवनाख्यादृषेः सकाशात् वव्रिं कृष्णं शरीरमावृत्यावस्थितां जरां प्रामुञ्चतं प्रकर्षेणामोचयतं । तत्र दृष्टान्तः द्रापिमिव द्रापिरिति कवचस्याख्या यथा कश्चित्कवचं कृत्स्नशरीरव्याप्तं धृत्वा पश्चाच्छरीरात्पृथक्करोति तद्वत् उत अपिच हे दस्रा एतत्संज्ञौ दर्शनीयावश्विनौ जहि तस्य पुत्रादिभिः परित्यक्तस्य ऋषेरायुर्जीवनं प्रातिरतं प्रावर्धयतं प्रपूर्वस्तिरतिर्वर्धनार्थः आदित् अनंतरमेव युवानं सन्तं कनीनां कन्यानां पतिम्भर्त्तारमकृणुतं अकुरुतं ५ बन्दनोनाम कश्चिदृषिः सचासुरैः कूपे निखात उत्तरीतुमशक्नुवन्नश्विनावस्तौत् तमश्विनौ कूपादुन्निन्यतुरिति तदाह । नरा अयोग्यस्य नेतारौ हे नासत्यावश्विनौ वां युवयोः सम्बन्ध्यभिष्टिमदभ्येषणयुक्तमाभिमुख्येन प्राप्तव्यं तथा वरूथं वरणीयं कामयितव्यं तत्कर्म शंस्यं अस्माभिः प्रशंसनीयं राध्यं आराधनीयञ्च किम्पुनस्तत्कर्म विद्वांसो जानन्तु युवां निधिमिव निक्षिप्तं धनमिवापगूळ्हमरण्ये निर्जने देशे कूपमध्येऽसुरैर्निगूढं वन्दनाय वन्दनमृषिं दर्शतादध्वगैः पिपासुभिर्द्रष्टव्यात्कूपादुदुपथुः उदहार्ष्ट एवं यदेतत्कूपादुद्धरणं तदित्यर्थः ६ इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच ततोऽश्विनावश्वस्य शिरश्छित्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राऽश्व्यं शिरः प्रत्यधत्तां तेनच दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास तदिन्द्रो ज्ञात्वा व-

|562|

तिपाद्यते हे नरानरावश्विनौ वां युवयोः सम्बन्ध्युग्रमुद्गूर्णमन्यैर्दुश्शकं दंशः कर्मनामैतत् युवाभ्यां पुरा कृतं तत्कर्म्म सनये धनलाभार्थमाविष्कृणोमि प्रकटीकरोमि। तत्र दृष्टान्तः तन्यतुर्न यथा मेघस्थः शब्दो वृष्टिं मेघान्तर्वर्त्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत् किं तत्कर्म अथर्वणः पुत्रो दध्यङ् एतत्संज्ञऋषिरश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शीर्षा वां युवाभ्यां मीमिमां मधुविद्यां यद्व यदाखलु प्रोवाच प्रोक्तवान् तदानीमश्वस्य शीर्षःसंधानलक्षणं पुनर्मानुषस्य शीर्षःप्रतिसन्धानलक्षणश्च यद्भवदीयं कर्म्म तदाविष्कृणोमीत्यर्थः ७–एवञ्चात्र भुज्य्वादीनामश्विनोर्ध्यातृध्येयभावात्मन्यनुग्राह्यानुग्राहकभावात्मनि च सति सम्बन्धेन हि कार्यान्तरापादनलक्षणः कश्चिद्ग्रहणमर्हति सम्बन्धः। एतेनापद्भिरभिभूतानामलौकिकसामग्र्या एव सिद्धासमाश्रयितव्यता सा हि देवतासंराधनलक्षणा नत्वर्वाचीना यथायथमापद्यमाना तस्याऽप्यापत्तिस्वाभाव्यात्। नह्युपप्लवस्वभावं वस्तूपप्लवेभ्यः स्वभूतेभ्यः पर्य्याप्तं मोचनाय जातुचित् नहि दारुधियाऽऽरूढो ग्राहो नद्याः पारं नेता अपित्वत्रैवारादारोहसाहसिनः श्लाघनीयप्रज्ञस्य। उदाहृतजलधियानादिकर्म्मणां भुज्य्वादिकर्त्तृकाणामुपासनामात्रप्रकरणपरिपठितत्वात्प्रकरणेनानेन लक्ष्यमाणार्थकात्स्न्र्यमप्राकरणिकमस्पृशदेव निजाभियोगमायतते मुख्यार्थलक्ष्यार्थयोरादिमस्यैव स्वरसवाहिप्रवृत्तिगोचरतया तदुपस्थापकसामग्रीविशेषस्यास्थानित्वे स्थानित्वे च द्वितीयोपस्थापकसामग्र्यास्तामनुकूलीकृत्यैव प्रथमः प्रतीतियोग्यतामश्नुते। स हि नकथञ्चिद्व्यथयितव्यो वस्तुगतिं विमृशद्भिर्विचारकवरैः–तथाच भुज्य्वादयो बाहुजा द्वीपान्तरीयराजानां विजयायैव जग्मुरित्यालम्भ्यापि प्रकृतार्थमन्यार्थपर्य्यवसायितयाऽनु-

दाहरणरूपमेव तदिति ताभिरेवर्ग्भिरध्यवस्यामः सुतराम् "जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्नि"रित्यस्यामृचि नावेव सिन्धुं यथा कश्चित् कर्णधारो ग्राहादिभिर्दुष्टसत्वैराकुलितां नदीं नावा तारयति तथा जातवेदा अरातियतोऽरातिं शत्रुमिवास्मानाचरतः शत्रोर्वेदो धनं निदहाति नितरां दहतु भस्मीकरोतु। अपिच सोऽग्निर्नोऽस्मान् विश्वा विश्वानि सर्व्वाणि दुर्गाणि दुर्गमानि भोक्तुमशक्यानि दुःखान्यतिपर्षत् अतिपारयतु अतिक्रम्य दुःखरहितं सुखम्प्रापयतु इति गम्यमानदृष्टान्तदार्ष्टान्तिकस्वरूपपर्य्यालोचनया नदीनौकायाः सम्बन्धोऽधिगम्यते। नतु समुद्रनौकायाः पारावारतरणतारणयोग्यताया दुःशकत्वात्।

यद्यपि वीरवर्म्मशङ्करवर्मयशोवर्मललितादित्यकान्यकुब्जकल्याणशर्मविजयसिंहादीनामशेषद्वीपसञ्चरणादयो द्वारभूतसमुद्रेणैव सम्पन्नाः ब्राह्मणैर्वाणिज्यजीविभिरधिष्ठितास्सुमत्राचीनजावादिदेशयात्रोपायभूताः किलोल्लिखिता नावस्तदानींतनाः देशेषु तेषु दीर्घावासोऽपि तेषामनुक्रान्तः तत्र तत्स्थापितास्संतस्समयान्तरे निराश्रयाश्शिलाप्रतिमाः शिवगणेशदुर्गादीनामद्यापि सन्दृश्यन्ते हि संग्रहागारे होलंडीयलैडेन्नगरे तत्सञ्चरितस्थानान्यद्यावधि लक्षणैरितैररपि कैश्चिदुद्वीक्ष्यन्ते द्वीपान्तरेषु संस्कृतवर्णा ग्रन्था वा भारतादयो दृष्टप्राया इत्यादिबहु चात्र चोदितव्यमवगम्यते तथाप्यव्यवस्थितचरमदृष्टान्तोचितमिति न्यायानुव्यवहाराः पर्यालोचनीयाः प्रमेयप्रतिष्ठित्यै परिशुध्यै च। येच यथोक्तब्राह्मणा द्वीपान्तरं गन्तारो नते महापुरुषावेदपुरुषाच्छन्दःपुरुषा वा अपितु शरीरपुरुषा एव यथा चैतरेयश्रुतिः "चत्वारः पुरुषा इति बोध्यः शरीरपुरुषश्छन्दः पुरुषो वेदपुरुषो महापुरुष इति"—एवञ्चेन्द्रियारमणपरप्रयोजनैकपरिप्रेरितात्मनां हि श-

रीरपुरुषाणां जघन्यकोटिकतया न तदनुष्ठितक्रियानन्वितरेषां त्रयाणां पुरुषाणां कर्म्मसूपपद्यन्ते प्रामाण्यनिर्वहणाय । असमशीलत्वादितरेतरम् समशीलानाञ्च ता अतद्रूपा एवेति प्रत्युत स्वपक्षप्रतिष्ठानाय पर्याप्ता निगद्यन्ते परपक्षबाधनाय च। तेषाम्वा द्वीपान्तरमुपासितवतां का नु दशा संवृत्तेति प्रस्तुतदशामनुसन्दधानैरनुसन्धातव्यमासमन्तात् तेनच न किञ्चिद्व्यवस्थितमर्य्यादमधुनातनप्रवृत्तिप्रयोजकमालक्ष्यते प्रवर्त्तनं तदीयं यतो माभवत्वेव तेषामुदाहरणप्रयासावतारोऽमीषामायुष्मताम् । महाजनोदाहरणं तूपादीयमानमर्थायैव भवन्न निवार्य्यते क्रियास्वात्मीयासु । तेच निरूपितस्वरूपाभुज्य्वादयोऽर्जुनादयो विक्रमादित्यादयश्च ।

अथ "भिन्नं सिक्तं वाऽभिमन्त्रयेत् समुद्रम्वः प्रहिणोमि । स्वां योनिमपि गच्छत अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपतौ । अथास्य उत्तानमञ्जलिमधस्ताद्योक्तस्य निधायात्मनश्च सव्यम्पूर्णपात्रन्निनयन् वाचयेन्माहम्प्रजाम्परासिचं या नः सयावरीः स्थ न। समुद्रेवो निनयानि स्वं पाथोऽपाथेति" भगवदाश्वलायनश्रौतसूत्रयोः "समुद्रं व इत्यभिमन्त्रये"ति शाङ्खायनश्रौतसूत्रस्य च साक्षादेव श्रुतिवाक्यानुपूर्व्वीकाणामध्वरस्वरूपनिरूपकाणामप्यध्वरानुष्ठानफलभूतैहिकसमृद्धिविशेषस्य समुद्रोपलक्षितद्वीपान्तरीणमहार्हवस्तुजातसमवाप्तिलक्षणस्यावेदकतया स्थितत्वादुक्तयानगमनयोर्वैदिकत्ववैधत्वयोर्वज्रलेपायमानतया यथा व्याख्यातमहाजनाचारनान्तरीयकतया च कथं तन्निह्नवैकयोजकानामपुरुषार्थिनामुज्जृम्भन्तामुन्मादप्रवादाः कस्य हेतोरैहिकसुखातिशयसाधनमपाकुर्वन्तां निन्दन्तो वा किमपूर्वं फलमुपभुञ्जन्तामिति चेन्मैवम् । सूत्राणामभिप्रायस्यान्यविषयविषयत्वात्तदनुप्रश्नानां सर्वथैवानाश्रयत्वाच्च—तथाहि "समुद्रं वः प्रहिणो-

मीति। सर्वाणि च सोमलिप्तान्यवभृथे प्रविध्यति ऋजीषस्य स्रुचं पूरयित्वाप्सूपे मारयति। समुद्रे ते हृदयमप्स्वन्तरिति। प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्यथालिङ्गं व्युत्सिच्य। समुद्रं वः प्राहिणोमि स्वां योनिमपि गच्छत। अच्छिद्रः प्रजया भूयासं मापरासेचिमत्पय इत्यन्तर्वेदिशेषं निनीय यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीमधि मुखमङ्धि सरस्वति। या सरस्वती वै शम्बल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे"इति भगवदापस्तम्बश्रौतसूत्रैरुद्धृतश्रुत्यवयवानां विनियोगपृथक्त्वनिर्धारणया यथालिङ्गं व्युत्सिच्य तत्तन्मन्त्रप्रकाशितायां दिशि तेन तेन मन्त्रेणोर्ध्वमपां सेचनपुरस्सरं "समुद्रम्वः प्रहिणोमी"ति मन्त्रेणान्तर्वेदिशेषं पयो निनयेदित्येषोऽर्थः प्रस्तूयते। सोमलिप्तानामर्थानामवभृथे प्रक्षेपणमापद्यते ऋजीषपूर्णायाः प्रचरण्या अप्सु निमज्जनीयता चावगम्यते। इहहि समुद्रशब्दः समुद्रगुणोपलक्षितान्तर्वेदिवेदिकाया एवाभिधाता नतु साक्षाज्जलधिमभिधत्ते तन्नयनस्य यज्ञक्रियायामकिञ्चित्करत्वादप्रस्तुततया तद्व्याख्यानव्यापारस्य निग्रहस्थानकुक्षिनिक्षिप्तत्वाच्च "समुद्रं वः प्रहिणोमी"त्यारभ्य "यूयम्पात स्वस्तिभिः सदा न इत्यन्तर्वेदिशेषान्निनीये"त्याद्यन्तं तदीयमेव सूत्रान्तरमिममर्थमतितरान्द्रढयति। अन्यच्च "गुदकाण्डमेकादशधा तिर्यक् छित्वा सम्भिन्दन्नपर्यावर्त्तयन्ननूयाजानां वषट्कृतेवषट्कृत एकैकं गुदकाण्डम्प्रतिप्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रम्"इति सूत्रम्पुनर्यथोक्तामेव वेदिकां स्वावयवसमुद्रशब्दनिगम्यमानां लक्षणावृत्त्या विषयीकरोति। "तत्रैवोदपात्रं निनयेयुः समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छतारिष्टास्तन्वो भूयाः स्म मापरासेचिनो धन"मिति भगवल्लाट्यायनद्राह्यायणयोः कल्पसूत्रमपि सवनत्रयबर्हिष्पवमा-

नकरणाधीनप्रयोगनिर्वाहकं सत्तस्मिन्नेव चात्वाले उदपात्रं निनयेयुः। यत्तदुदपात्रमुपात्ते कर्मण्यङ्गभूतं तदेव चात्वाले समुद्रं वः प्रहिणोमीत्येतदादिना यजुषा निनयेयुरुद्गातार इत्यर्थकमर्थान्तरानवकाशं सदन्तर्वेदिवेदिकामेवोपस्थापयति एतदेवाभिप्रेत्य "समुद्र इति ब्रह्मणस्सदनम्" इति तयोरेवर्ष्योः कल्पसूत्रमुक्तार्थसम्पादकमुपरितनम्प्रवर्त्तते तत्रैव तिष्ठन्तस्सन्तः समुद्र इत्यनेन यजुषा ब्रह्मणः सदनमुपतिष्ठेरन्निति तदर्थः। तथाच नोदधिवाची समुद्रशब्दोऽत्रेत्यवधेयम्। "आपस्थ युष्माभिरित्यनेन मन्त्रेण प्रतिगृह्णाति नियन्नभिप्रयते समुद्रं व" इति पारस्करगृह्यसूत्रमपि सागरपरताम्प्रत्याचष्टे समुद्रशब्दस्य प्रतिगृहीतमर्घं शिरसाभिवन्द्यं निनयन् भूमौ प्रवाहयन्नभिमन्त्रयते समुद्रं व इत्यनेन मन्त्रेणेति सूत्रार्थः "अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहये" दित्याश्वलायनगृह्यमपि नदीनौकारोहणपरमेव सन्न समुद्रयानविषयमित्यवधार्य्यताम्। तथाच समुद्रयानयवनदेशाभिगमनयोः स्वरूपासतोर्न यथोक्तदिग्विजयव्याजेनात्रात्मलाभस्सम्भवत्युदासीनजनानामुपन्यस्ताध्वरविजयमहारम्भसम्बन्धेभ्यो निरधिकाराणामिति स्थितम्।

परेतु अशोकचन्द्रगुप्तादिप्रभुत्ववेलायामलेग्जाण्डरादिग्रेट्शेल्यूकस्पुरोगमा यवनमहाराजास्ततोऽर्वाचीना बाबरादयः शकाश्च नानानामानो भारतवर्षजिगीषावशंवदाः पादचारैः पावयाम्बभूवुरार्यभूमिमार्यविद्याविचारान्दूषयाम्बभूवुः परां सम्पदमपहरन्नुदचारयन्निजाचारान्निजावासांश्च-सर्वत्र प्रजाश्चार्यवर्षीयास्तैराविलीकृतस्वक्रियासामान्याः न काश्चिदासां स्वस्वरूपपरिनिष्ठा यथापूर्वं वैदिकी लौकिकी वा क्रिया नवा तत्र समाश्वासः प्राग्वत् नापि धर्म्मिष्ठाऽधर्म्मिष्ठा वा ज्ञायन्ते निजभावैः-नहि यवनहूणादिसञ्चारावासवर्ज्यं जनपदपुरतीर्थक्षेत्रादिकिञ्चिदसङ्कीर्णार्यमर्यादमवशि-

ष्यते नहि तेषां वेषभाषाविचाराचारसङ्कलनादृते निस्संकलन-स्वीयवेषाद्युन्नीताः कच्चिदाधीयन्ते गृहमेधिनः नहि निजदेशाधीशाः शासनशैलीमनुपालयमानाः पूर्वेषां लक्ष्यन्ते नवा शक्नुयुरनुपालयितुम्परवशाः-मतान्यनेकानि-पन्थानो भूयांसस्तदधीशा दुःशीलास्तदनुवर्त्तिनो दुर्वृत्तास्तद्वादा दुर्वादास्तद्बोधो दुर्बोधः-एवमाद्यनेकोपद्रवग्रस्तस्यार्यवर्षस्यानार्यवर्षत्वव्यवहारयोग्यत्वे कोन्वत्र यथोपन्यस्ताय्य्यावर्त्तब्राह्मणत्वाद्याग्रहग्रहग्राहिचेतःप्रसादः कोऽनुवा फलपाको वर्णितान्तरायव्यूहविध्वंसनपटीयानिति सङ्गिरन्ते । अत्राभिधीयते-चन्द्रगुप्तादिवेलासमायातानामलेग्जाण्डरप्रमुखानामन्येषाञ्चान्यकालिकयवननराधिपानामुपावृत्तगुणाधानसम्बन्धस्य जयक्रियामहोत्साहसंस्कारोपोद्बलितस्य संस्कारान्तरनिरूढसामग्र्याश्च प्रयोजकतायां तदासादनैकचिन्तावतारस्य तत्रताऽवगम्यते बलाबलपरामर्शवशादेव क्रियाऽवश्यम्भाविताभावितयोरर्थिजनसार्थसम्पादनीयत्वस्य सूपपादतरत्वात् । यद्यप्यैच्छन्नेव ते तेषामागमनावरोधिप्रयत्नविशेषमागमने वा स्वक्रियाव्याघातौपयिकविचारमेतमास्थितवन्तोऽभूवन्नेव भूरिशः पराभावयाम्बभूवुश्च तान्निरर्गलम् । शश्वत्सामग्रीवैकल्यवशेन प्रतिहन्यमानाः परेषाञ्च तस्यास्साकल्ययोगात्क्रमेण साम्राज्यसम्पत्तिं हि सम्भवन्तीं वन्ध्यामनोरथप्रायाभिर्विचारणाभिरन्यथयितुं कथङ्कारम्पारयेरन्-एवञ्चार्यजनगुणक्रियावैकल्यमेवार्यभूमिकापावित्र्यन्यूनतापादकं तत्प्रयोज्यः परेषां प्रकर्षश्च । सहि यावन्निजोदयमनुदयिनामाचारादीननुत्तमानप्यधरीकुर्यात् निजानेव निरवद्यतया प्रसारयेत् । परमत्र तदनुकरणं कुर्वाणेष्वेवोदितापत्तिरुज्जृम्भते नतु कारयमाणेषु कारयमाणा हि दुरुद्धरावेशवशादनिष्टतमेषु नियोजयेयुः परमत्र जानन्तोऽप्युत्पतन्तो विनश्येयुरेव । स्वस्वरूपस्मृतिशून्यानां किंकिं नापतेदापद्रूपम्-कायिकीर्वाचिकीर्मानसिकीश्च क्रियाः काः

का न जह्युरनवस्थितचित्ताः-काः कावा नोपादद्युरपरेषां खलु ताः कान्काँश्च सङ्कल्पाननन्यसाधारणानुद्भावयेयुः किमङ्ग पुनः पुरतीर्थादीनां देशाधीशानाङ्गृहमेधिनां मतवादिनाञ्च प्रमादगोचराविचारणा-सर्वस्यास्य दुर्दैववशंवदस्य विभेदनाय भेदकदैवान्तरप्रादुर्भवनमेव साधकतमं सदभियुक्तप्रशास्तिमनुकूलयद्भिर्निरूढप्रज्ञावद्भि"रुद्योगस्साहसन्धैर्य्यम्बुद्धिः शक्तिः पराक्रमः । षडेते यत्र तिष्ठन्ति तत्र देवोऽपि शङ्कते १ न साहसमनारुह्य नरो भद्राणि पश्यति । ऐकमत्योद्भवा शक्तिः सर्वसम्पद्विवर्धिनी । धर्मादर्थश्च कामश्च धर्माद्भोगास्सुखानि च । धर्म्मो लोके विपन्नञ्च त्रायते महतो भयात् । आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः । पुण्यञ्च मत्प्रियत्वञ्च लभ्यते ब्रह्मचर्यये"त्यादि स्मृतीनामर्थानुष्ठानसम्पत्सम्पन्नैरार्य्यद्वीपस्यानवधिकातिशयराज्यसत्ता धर्मसत्तयोस्संरक्षिभिर्भवितव्यमार्य्यमहाकुलप्रसूतैरेव यदा कदाचित् । नतु तूर्णीं विलापालापप्रणालीसमालम्बिविकृतवार्त्तकैर्धर्म्मोध्वदत्ततिलाञ्जलिभिरापातव्यापारादिप्रक्रियादत्तावधानैर्ब्रह्मक्षत्रादिनामधारिभिः कथञ्चिदित्यवधेयम् ।

अन्ये तु धर्मविप्लवविवक्षया द्वीपान्तरपर्यटनादिचेन्निषिध्यते प्रस्थितवन्तश्चेद्बहिष्क्रियन्ते तर्ह्यार्यप्रजैव पर्यायेणोच्छिन्द्यात् । द्वीपान्तरमननुभवन्तोऽप्यनाचारबहुला भूयांसो न बहिष्क्रियन्ते१ यवनहूणाद्यनवच्छिन्नसम्पर्किणो न दूरीक्रियन्ते३रङ्गोनमोरिषसजाङ्गबारादिपुटभेदनेष्वार्यवर्षबहिर्भूतेष्वसकृद्व्रजन्तोऽपि नाऽऽक्षिप्यन्ते ४ आमिषाशिन औत्तरीयाः ५ चर्मवारिभक्षाः पाश्चात्त्याः ६ मत्स्याहारिणः प्राच्याः ७ मातुलदुहितृपरिणयप्रचारा दक्षिणात्याः नते सुतरामविप्रतिपन्नदुरितवन्तोऽपि ज्ञातिबहिष्कृता यदाकदावा कुण्डा गोलकाश्च प्रतीतचराः दुष्परिग्रहोपजीविनो न परिह्रियन्ते १० मृषावादिनो न विधूयन्ते ११ प्रच्छन्नपाप्मानो न प-

रित्यज्यन्ते १२ प्रकटपापा न प्रधर्ष्यन्ते १३ नाटकाद्युपजीविनो न तिरस्क्रियन्ते १४ अङ्गवङ्गकलिङ्गसिन्ध्वादिप्रवासिनो न जातु जातिबाह्या अनुभूयन्ते १५ नहि गुर्वादिद्रोहिणो निगृह्यन्ते १६ एवं यथोक्तदुर्वृत्तव्रातपरिदूषितात्मनां गुरुभूतबहिष्कारयोग्यताकत्वमुपेक्ष्य दोषे लघुनि जलधियानद्वीपान्तरप्रयाणलक्षणे प्रसक्तानामुदाराशयचन्द्रमसाङ्किमित्येष कलङ्कराहुर्मूर्धनीति मन्यन्ते। अत्राचक्ष्महे प्रजागतार्यताऽसाधारणधर्म्मोच्छेदो न मनागनुमोद्यते। नापि तद्विभवप्रभावहेतुभूतसाधनानुष्ठानव्यापारो वा कथमप्याक्षिप्यते अपि त्वनवधिकातिशयार्यमर्यादा महिमानुपालनपूर्वकमेव विभवप्रभावयोरधिगम्यतामभिदध्महे। नचैकतरनिष्ठैव फलपर्यवसाना-विभक्तप्रवृत्तेः परिनिष्ठाऽप्रतिष्ठापकताया आनुभविकत्वादिति वाच्यम्। उभयोरप्यविशिष्टयोग्यताकत्वेन तुल्ययैव गत्या रिरक्षयिषितत्वाद्व्याकीर्णाभिरपि प्रवृत्तिभिरर्जनीयतरार्थोपस्थापनौपयिकाग्रहातिशयस्याभ्यर्हिततरत्वाच्च-बलाबलविमर्शे वातयोर्धर्मानुपालनसत्तैव सर्वशः शिवङ्करी। नच वाच्यं विभवादिभिर्विपक्षिगणप्रकर्षे भवेदेव तैरभिभूयमाना धर्म्मस्थितिरन्तर्धिमनुभवन्ती निराश्रया स्वीयव्यावहारिकयोग्यतादौर्बल्यवशादिति-धर्मानुष्ठानमहिम्नैव समस्तापत्तिदूरीभवनस्य परस्सहस्रोदाहरणैर्निर्णीतचरत्वाद्विधानविषयत्वाच्च। नहि तावता तन्न्यूनतायास्सहनीयत्वमनुमोदेमहि अपितु तत्सत्तामनुपमृद्यैतन्न्यूनतापनोदनमभिवाञ्छामहे। द्वीपान्तरजिगमिषवः साम्प्रतिकास्तु स्वीयं धर्म्ममपरामृशन्तः प्रत्युत द्विषन्तश्च परेषामाचाराननुकुर्वाणाः स्वार्थपरार्थसमर्थनासमर्था आर्य्यमर्य्यादाभ्रंशकरा एवोद्वीक्ष्यन्ते-नतु स्वधर्म्मकामाः शौर्य्यधैर्याद्यङ्कुरितशोभनहृदया राजानो राजपुरुषा वा जिगमिषन्ति क्वचित्तथाविधाभिमानिनः प्रस्थितवन्तोऽप्यपरामृष्टनिजाभिनिवेशा अनर्जितोचितार्थैकदेशा एव प्रत्यावृत्ताः प्रती-

यन्ते गमनं हि तादृशानां निजपदवीपर्य्यालोचनया परिहासायै-वावकल्पते केवलमिहापि । एवञ्च निजाविच्छिन्नप्रबन्धोच्छेदका-रित्वं प्रकृत्यार्य्यप्रजोच्छेदकारिणः स्वयमेव हि ते प्रयोज्यस्वरूप-हानिम्प्रति प्रयोजकयोग्यताहानस्य हेतुत्वात् । न चार्य्यवर्षे वा व-सित्वा तद्भ्रंशकरत्वे तेषामर्थतः किमिति वैषम्यमिति वाच्यम् तद्वि-भ्रंशप्रसक्तेर्न कुत्राप्यनुज्ञातत्वादार्य्यवर्षे नन्वनल्पताऽसम्भवाच्च । पृच्छाभिरेतादृशीभिः स्वक्रियाऽनुवर्त्तिनीभिरुपलक्ष्यैव निजधर्म्मे नास्तिक्यमापाततो वा तच्छीलनप्रतीतिमास्थायोक्तनिर्बन्धविशे-षस्य परिणतेः श्रेयोनिदानस्य विधीयमानत्वात् । नच वाच्यं "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"ति वचनमकूलयतां नो न निजधर्म्मसमयव्यभिचार इति । तथाविधाभिर्निवेशवतां तर्ह्यभि-निवेशभङ्गभियाऽर्थाल्पतरताकृत्या च अगमनमेव वरमिति ज्ञाप-यितव्यत्वात् । तथाचोक्तगमनादिनिषेधकप्रमाणप्रपञ्चावतारआर्य्य-तापरिपालनपुरःसरमार्य्यसन्तानाविच्छिन्नप्रबन्धलक्षणमहोन्नत्यै केवलमभिप्रेयते । द्वीपान्तरगन्तार इव व्यक्तीभूतदोषसमवेतत्वे तेषामप्यबहिष्कार्य्यताऽभावसम्बन्धस्य प्रतिप्रत्ययमध्यवसीयमान-त्वाद्बहिष्काराबहिष्कारयोर्दोषादोषवत्तयोरेव निमित्तत्वाच्च—यथा-ह "विषमा विपरीता नश्यन्ति तानाचार्य्योपदेशो दण्डश्च पालय-त" इति गौतमः । नहि कश्चित्स्वच्छन्दतामर्हति मनागपि तस्याः पु-रुषार्थप्रत्यनीकत्वात् । नहि पुरुषार्थादृते पुरुषः पुंस्त्वं स्वं सफली-कुर्य्यात् । आत्मनिष्ठप्रत्यासत्त्या तयोः प्रयोज्यप्रयोजकभावः । असति सङ्करीकरणाद्यापादकसम्पर्कातिशये निजमर्य्यादामनुपा-लयतामदूरीकरणीयत्वात् । नच तयैव विधया द्वीपान्तरे सञ्चर-तान्नः किमिति सङ्ग्रहाननुग्राहिशङ्कापरम्परेत्याशङ्कनीयम् । उच्छा-स्त्रप्रवृत्तीनामार्य्यवर्षबहिर्वसतेर्य्यथोपन्यस्तसङ्करीकरणाद्यनापत्ति-प्रत्याशाया असम्भवे तन्निरूपितवैधर्म्यस्यैव दुष्परिहरत्वात् ३ र-

ङ्गनादिनगरीर्व्रजन्तः प्रायशो दास्यमाचरन्तो भृतकभेदभिन्नाश्च जघन्यजातीया एव-परिगणितवर्णवर्त्तीचेत्तद्धर्म्मानुवर्त्ती तदा सोपि तदापत्तिमर्हत्येव यथायोगम् । परमत्र ब्रह्मदेशसिंहलद्वीपयोरार्य्यव-र्षम्प्रत्युपार्य्यवर्षभावम्भजमानयोः पुरा किल चातुर्वर्ण्यसम्बद्धतयो-पनिबद्धयोस्ततो वैधर्म्यमनुभावनीयम् ४ आमिषाशनाद्यसा-धारणदोषलक्षणानामपीतरयावद्धर्म्मानुष्ठानसन्निविष्टानां शिष्टवि-शिष्टानां प्रचारस्यास्य मूलं किंचिदास्थितवतो "देशधर्म्मजातिध-र्म्मकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् । जातिजानपदान् धर्मान् श्रेणीधर्म्मांश्च धर्म्मवित् । समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मम्प्रतिपादये" दिति गौतममन्वोः शासनोपजीव्यस्य भूयः प्रमाणविप्रतिषिद्ध-स्यापि प्रमितिविषयतावच्छेदकावच्छिन्नतामाक्रान्तवन्तः स्निग्धस्य स्नेहनवद्विचारणायामनाक्षेपविषयत्वात् । तेपि वा प्रचाराश्चतुर्णा-मप्यवच्छेदकावच्छेदेन न सम्भवन्ति । अपि तु सामानाधिकरण्ये-नैव । तत्रापि मूलीभूतप्रमाणचिन्तायां प्रथमतृतीययोः श्येनाधि-करणन्यायस्य क्रोधाक्रान्तस्वान्तम्प्रत्यभ्युपायमात्रप्रदर्शनपरता । यो हि प्रत्यर्थिपराभूतिमन्विच्छेत् तस्यायमभ्युपायः "श्येनेना-भिचरन् यजेते"ति । नतु श्येनेनाभिचरितव्यमिति गम्यते विधान-ङ्क्विचिद्वा । प्रकृतेपि तन्न्यायमाश्रित्यैव "प्रवृत्तिरेषा भूतानां निवृ-त्तिस्तु महाफलेति" स्वाभाविकप्रवृत्तिविमुखीकरणविवक्षयाऽदृष्टा-र्थप्रत्यायनमेवाभ्यर्हिततरमापद्यते चर्म्मोदकपानप्रचारस्य कयाचि-न्नपेक्षया मरुभूमिकादुर्न्निमित्तप्रसङ्गैकसंजातस्यादौ किल जघन्य-जातीयमानवालम्बनविषयस्य "गतानुगतिको लोको न लोकः पार-मार्थिक" इत्याभाणकैकप्रमाणकस्यानुदाहरणप्रायत्वात् । नहि त-दादिमण्डलेष्वध्ययनादिगुणमण्डितास्तमेतं न्याय्यम्मन्यन्ते सम्भा-वितानां गेहेष्वधुनापि प्रचारस्यास्यादृष्टचरत्वात् । यद्यपि "गृहस्थः सदृशीम्भार्य्यां विन्देतानन्यपूर्वां यवीयसीं असमानप्रवरैर्विवाह-

ऊर्द्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमा"दिति गौतमवचनान्मातुलसुतापाणिग्रहणकर्म्मणो गम्यते निषेधः अन्या अपि मन्वादिस्मृतयो नानुमन्यन्त एव तत् तथापि "मातुलस्येव योषे"त्यादिश्रुतिमूलकतया तदाचारस्य दाक्षिणात्येषूपलम्भात् । नच तच्छ्रुत्यर्थस्य मन्वादिभिरस्मृतत्वात्सांशयिकतैवेति युक्तं वक्तुम् श्रुतेरपुरुषशेमुषीमालिन्यतन्त्रायाः सिद्धत्वे मन्वाद्यस्मृतत्वन्यूनतोद्भावनमप्रामाण्यलक्षणमुपपद्यते तैरस्मृतार्थानामनेकेषां नानाप्रकरणेषु मन्त्रार्थवादादिभ्योऽवगमात् । तस्याऽपि वा प्रचारस्य तेष्वव्यापितयाऽनुभूयमानत्वाच्च—तथाच यथोपन्यस्तचतुर्विधाचाराणामन्यविधतया विधान्तरमापाद्यापि न साहसमात्रेण प्रकृतावगम्येऽर्थे प्रमाणसामान्यहीने तदादीनां ज्ञातिबहिष्करणादिसाम्यमाकलनीयम् । कुण्डगोलका हि व्यक्तीभूतनिजभावाः सन्तः परम्परयैव बहिष्कृततरा बहिष्क्रियन्ते करिष्यन्ते च दोषाविर्भावं विमृशद्भिर्ज्ञातिपरिषद्वरैरित्यवगन्तव्या तद्गतिः दुष्परिग्रहलक्षणदुराचारवन्तः श्रोत्रियसम्भावितसामन्तैः प्रत्यर्थमुपेक्ष्यन्त एवेति किमितस्तेषां शिष्टकोटिबहिष्करणलक्षणादनुपादेयसाङ्गत्यादन्यच्छासनमुत्कृष्यते १० अनृतं वदतां वाचः प्रतिष्ठामप्रतियन्तो व्यवहारिणस्तेष्वत्यर्थमविश्वस्युरिति किं ततस्तेषाम्परो दण्डः क्लेशावहः ११ प्रच्छन्नपाप्मनां दिव्यादिप्रमाणैरप्यप्रतीततया न तेषां दोषित्वापादकसामग्रीमृते तदापत्तेर्य्योग्यताऽवकल्पनम् । अपितु "गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनां । इह प्रच्छन्नपापानां शास्ता वैवस्वतो यम"इति वसिष्ठस्मरणादपराधे सविकृते तद्विषयानियमे यमगामिशास्तृता सुव्यक्ता न विहन्यते । वस्तुतस्तु "कृत्वा पापं न गूहेत गुह्यमानं हि वर्द्धते । कृत्वा पापम्बुधः कुर्य्यात्पर्षदानुमतं व्रत"मिति शङ्खस्मरणादुपेक्षालक्षणापराधाधिक्यानिष्पत्तये प्रायश्चीत्तीयतावगमात्तदाचरणमपि तत्रतत्र गम्यत एव १२

सति हि प्रतीतियोग्यताकत्वे प्रकटपापानां यथोचितदमनीयत्वं प्रतीतचरमस्ति नेति सञ्चिन्त्यताम् १३ श्रोत्रियसम्भावितादिभिरसंसृज्यमानव्यवहारवत्तया नाटकिनां किमितो नाटकमहाहाटकप्रकटाट्टहासः परीक्षकपरिदृष्ट्या १४ सति च सिन्ध्वादिदेशप्रवासनिमित्तप्रायश्चित्तप्रतिपादकयथोक्तवचने तदकरणलक्षणप्रत्यवायविशेषस्यानिष्टविशेषात्मकस्य प्रतिपत्तव्यतयाऽन्यथानुवर्त्तनस्यैच्छिकत्वेनाप्रमाणकत्वात्-सम्प्रति चातुर्वर्ण्यव्यवस्थानस्य तत्र सुव्यक्ततया यथोपन्यस्तदिशागमनावासयोरविगीततरत्वान्न जातिबाह्यादिप्रसक्तिरद्यतनी यथाश्रुतगुरुत्वादिसम्पत्तिसम्वलितत्वे तद्गोचरप्रतिपत्तिवैमुख्यस्यापि कलङ्कास्थानत्वेऽत्यन्ताविवेकिविषयद्रोहादिप्राप्तौ च तद्विषयलोकापवादलक्षणस्यैव "लोकापवादाद्भय"मिति। वचनोपजीव्यनिग्रहस्य प्रायश्चित्ततरस्थानीयत्वात् १६ तथाच व्याख्यातशङ्कावयवनिर्गलितार्थपर्य्यालोचनयाऽऽक्षेपविषयबहिष्करणादेस्तेषामविषयत्वमभिप्रेत्य वैधर्म्म्यस्योपपत्तौ समानविषयतानिमित्तकगुरुलघुदोषावतारप्रसक्तेरप्रस्तुततया ततः पार्थक्येनोपपन्नवरुणालयविहारहूणयवनादिद्वीपपर्य्यटनयोः प्रमाणसामान्यनिगृहीतयोर्निरूपितानन्तदोषमञ्जूषयोरार्य्यसन्तानानुपादेयत्वमत्युत्कटम्प्रतीयत इति तदाचरणप्रयुक्तकलङ्काऽतिशयान्वयान्मोमुच्यन्तामार्य्यसत्तमाः।

इतरे तु समुद्रो हि सर्वेश्वरमहामहिमानुमानभूमिः१-कुलाचलाश्चानेके निमज्ज्योन्मज्ज्य वर्त्तमानास्तत्र वर्ण्यन्ते२-दानवाश्चोषुः ३ अवात्सु रक्षांसि ४ तिमितिमिङ्गिलादयो महाकाया महीयन्ते ५ जाह्नवीयमुनाप्रमुखा महानद्यो विराजन्ते ६ महार्हरत्नवीथयः प्रदीव्यन्ते ७ इक्षुलवणादिनानानामकव्यक्तिगामिनस्ससमुल्लसन्ति षड्रसाः ८ सुरासुरास्ससम्भ्रमं ममन्थुः ९ ततस्तत्र महाऽमृतमजायत १० महालक्ष्मीश्चाजनिष्ट ११ परिशिष्टान्यष्टौ रत्नान्यजनि-

षन्त कौस्तुभादीनीति १२ पयःपारावारं ह्यध्यास्ते नागारिवाहनो नारायणः सगरनन्दनैरुत्पादितश्चेत्येवमादिविविधोदाहरणोपलक्षितनिजसत्ताविशेषस्य "समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति ह्यसिसरसामस्मि सागर" इत्यादिवचनाभिप्रायोद्दीपितस्य स्थलभागतो बृहत्तरस्य च समुद्रस्य परपवित्रतया पराभीष्टप्रदायितया च सर्वैरव्याहततत्प्रयाणवाञ्छावद्भिर्भवितव्यमिति निगदन्ति तदेतदसङ्गतं उदाहृताशेषगुणवत्तायाः समुद्रनिष्ठायास्तदधिष्ठितनौकाविहारप्रामाण्यसमर्थनासमर्थत्वात् प्रत्युत गुणगणमहिमभिर्विहारविरहिताया एव गम्यमानत्वाच्च। यद्युपदर्शितनिदर्शनैर्व्यावहारिकार्थवत्तामभिमन्येत स्वांस्वां तर्हि प्रत्यर्पिततरक्रियास्वेव फलबाहुल्यादाशिषाम्बाहुल्यनिबन्धनायाः प्रवृत्तेर्युक्ततया सुरासुरादिवद्रत्नाकरमथनाद्यमानुषफलपरम्पराधूर्वहमत्यासन्नङ्किमित्यद्य नाभिप्रेयते महामतिभिः येन ह्येभीरत्नान्येव रत्नाकराल्लप्स्यमानैः परिमुक्तदारिद्र्याऽधिक्यैर्निःसीमसम्पत्सम्पन्नैरप्रत्यूहम्भूयेत। नहि कश्चिदवष्टम्भान् विन्दमानेष्वासन्नसदाशीर्भिरुपेत उपेयते। दृष्टनष्टस्वरूपप्रायानेव कामयते न वासंदेग्धि तत्फलविशेषविधासु न ह्यनल्पबलवीर्य्यवदुदाहरणान्यत्यल्पबलवीर्य्याणाम्प्रयोजनसाधनायालम् न ह्यकुण्ठकण्ठीरवशौर्य्यधैर्यादिकथाः कथकेन केनचित् कयाचिद्व्यपेक्षया शृगालसङ्घायोपदिश्येरन् उपदेक्ष्यमाणा वा क्रिया कृतेऽवकल्पेरन् यतस्ते वादास्तेष्वेवालम्भावम्भजन्ताम्-प्रवचनवशान्नु नानुकारिणोऽमी वस्त्वंशलवस्य वा। अतोदाहरणोल्लिखनजन्माश्रमो वा मा भवतु। आपत्तिश्चार्थानुवर्त्तननिबन्धना आपादयितुर्न्न त्वनर्थायापार्थाय वा गङ्गादीनां सङ्गमनेन पावित्र्यमनुगमय्यापि विहरणम्महार्णवे किमात्मकम्। किंस्विदपूर्वनिबन्धनम् विष्णवादेस्तत्र वसति व्याख्यानानि निर्ब्रूयुः कतमस्मिन्कर्मणि किन्ते व्यापकप्रज्ञाकाः समुद्रादुत व्याप्यप्रज्ञाकाः-अपप्रज्ञा-

स्ततो हि रुङ्निरूपणार्हाः-किन्नस्युर्विप्रकृष्टतरास्तदाचारेभ्यः मनुष्यादीनाममृतायमाणमप्याज्यं मक्षिकाणां किल विषायते । नहि समुद्राम्भसो बिन्दुमबहुं वा प्राश्नीयुः सोल्लासमर्वाचीनाः स्मर्य्यते ननु महर्षिणा घटयोनिना चुलिकितो गिलितश्च क्षणादेव महाजलधिः-पाकशासनिना महाशूरेण शरव्यया सम्बद्धः प्लवङ्गमैर्हनुमदादिभिर्म्महीधरैर्न्निबद्ध इति च । त इमे अर्वाग्दृशामचिन्तनीयनिरूपणा इति परं विप्रकर्षः रजनीचरसामन्ता अपि तत्सीमामनुभावयमाना एवाभूवन् । दैत्यमहाराजा अपि तेभ्यः प्रकृष्टकर्म्मण्यसंवर्णिताः प्रतिसमुत्थानम् । समुद्रोत्थानि हि मथनमहोद्यमरूपितानि रत्नानि दिव्येव चञ्चूर्य्यन्ते निजतेजोमरीचिभिः किमुत भगवन्तो नारायणादयः क्षीरार्णवमहाभवनाः-साहचर्य्यमाचरन्तीमिन्दिरामपि दारान् प्रकृत्य किंत्वेनसम्प्रति निदर्शनप्रयासमभ्युपेयात् । नच निःशेषद्वीपसंव्यापितस्वीयजयस्तम्भाः सार्वभौमाः समुद्रयानसाधनैकयातायातप्रयत्ना ह्युत्तरोत्तरप्रजाः प्रतिपन्थानमवगाहयमानाश्चास्मदाद्या इति वाच्यम् । विजयमहोत्साहमहाद्वारसमरसमारम्भसम्पन्नानामनुदाहरणीयतरत्वात् । नच वाच्यं वयं वा सम्प्रत्यसमर्थाः समयान्तरे तथाविधा भूयास्मेति बालबला अप्यबालबलायानुगृह्णामहा इति । तथाविधप्रकृष्टतमप्रतापवत्तामृते प्रस्थानाभ्यर्थनाऽनुज्ञानयोरप्रवर्त्तयितव्यत्वात् प्रवर्त्तयितव्या वा अकार्य्यकारित्वादनर्थापादकत्वादिति युक्तियुक्तमनुचिन्तनीयत्वाच्च । नचोपायच्छेदन उपेयावाप्तिरुपपद्येत साधनानुष्ठानतन्त्रा हि साध्यसंसिद्धिरिति हि व्यवहारविदोपि मन्यन्त इति चोदितव्यम् तस्यास्तथात्वेऽपि साध्यनियतपूर्ववर्त्तिनीनां नाम साधनसामग्रीणां स्वस्थावस्थायामेवार्य्यमर्य्यादाऽबाधमधिगन्तव्यत्वात् द्वीपान्तरादेव तस्या अप्यवाप्तिप्रत्याशाया बहुतरान्तरायान्तरिताया निजधर्म्मान्तर्द्धानाय सहभाविताया अप्रयोजकतरत्वात् । नहि स्व-

धर्म्मगुप्तिपूर्वमेव ततः कलाप्रावीण्यमुदिताभ्युदयनिदानमुपपद्यता-मित्यवकल्पते विधर्म्मभूमेः सधर्म्मभूमित्वाभावस्यानुभविकत्वात्। नहि राजसत्तानामकारुणिकी स्वंस्वंनिबन्धावयवैर्धर्म्मं रक्षिष्यत्ये-वेति सम्भवति विषयस्यास्य विचारसहत्वात्। तथाहि सिद्धौ तस्यां कारुणिक्यामेव प्रभुतायां हूणधर्म्माभ्युच्चयौपयिकत्रिकरणोद्योग-प्रयासभूयिष्ठायां वर्णाश्रमधर्म्मपारम्परीपरिरक्षणानुकूलसाहायक-तटस्थभूतायामाङ्ग्लानां किल वेषभाषामभ्यसन्तस्तेषु परं कृतमै-त्रीकाः प्रथमं तावन्निजमर्य्यादाविप्रतिपन्नास्तदाचारप्रचारसामा-न्यहीनाः स्वेभ्यः परं ह्युदासन्ते। वितन्वते च वादातिवादान्। न जानते च निरूढस्वस्त्ययनं क्वचिदपि विचारणाभूमौ "येनास्य पितरो याता येन याताः पितामहाः। गच्छन्ते नैव मार्गेण नरिष्य-ति कदाचने"त्यादिसर्वज्ञानमन्वादिवक्तृकाणां वाक्यानामभिप्राय-मपरामृशन्तः सर्वत्र नास्तिक्यमुपयन्तो ह्यपयन्तश्चास्तिक्यं सन्तः साम्प्रतमेवंविधोच्छृङ्खलप्रवर्त्तनावतां व्राताः समुज्जृम्भन्ते। त एव समुद्रयानद्वीपान्तराभिगमनयोः पर्य्यनुयुञ्जन्ते। ननु निबद्धम-र्य्यादासम्भृतात्मानो लौकिकालौकिकभूतिकामाः पूर्वापरविचार-णाविहितमतिप्रकाशाः ब्रह्मक्षत्रादिसामन्तसम्भावितनरनिकराः कदाचित् यैर्भरतवर्षमहाभिधानमार्षधर्म्मनिरतिशयमहिमा च मा-त्रयाऽप्यनुपाल्येते। व्यावहारिकफलाभिसन्धिमत्तायाः स्वनिष्ठ-नानायोग्यताऽतिशयवशात्ततो भूयस्त्वेऽपि प्रधानधर्म्मप्रस्थानाव-श्यंभाविप्रक्षयसमीक्षया तैस्तयोरसम्मततरत्वात् तस्या एव वीक्षा-या निराबाधत्वाच्च। नच तेषां विचारानभिज्ञताधर्म्मजडताभ्यामे-वाप्रवृत्तिस्तत्र लोकभिया वेति साम्प्रतम् "आत्मार्थम्भोजनं यस्य सुखार्थं यस्य मैथुनं। वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवित"मिति भगवत्कृष्णद्वैपायनस्मरणाद्धर्म्मानुष्ठानार्थत्वादर्थकामयोर्द्ध-र्म्मस्य हिताभ्यामप्यये अर्थकामावर्थयमानस्यामेधसो दुर्म्मेधसश्च

श्रीरनर्थायैव । नहि वरविघाताय कन्यामुद्वाहयन्ति । द्रव्यञ्च धर्म्मानुष्ठानाय । धर्म्मश्चोपात्तदुरितापनुत्तये ततो ज्ञानोदयः । यथाच स्मृतिः "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्म्मणः । यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनी" ति । एवञ्च चोदकानामेवाविचारशीलताधर्म्मनिष्ठुरतोन्मार्गगामिता चेति कृतम्प्रज्ञया तेषाम् । तथाच सन्ध्यादिनित्यक्रियाणां श्राद्धादिनैमित्तिकानां समस्तेतरसदाचाराणां च रत्नाकरयानद्वीपान्तराभिगमनसाक्षान्निबन्धनस्तिलाञ्जलिर्निर्विशङ्क आपतति । ततः पातित्यम् "अहरहः सन्ध्यामुपासीते" ति श्रुतिः । "नानुतिष्ठति यः पूर्वामुपास्ते नच पश्चिमाम् । स शूद्रेण समो लोके सर्वकर्म्मविगर्हितः । क्रियाहीनश्च मूर्खश्च सर्वधर्म्मविवर्जितः । निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते" इत्याहतुरत्रिपाराशर्य्यौ । "आचारः परमो धर्म्मः सर्वेषामिति निश्चयः । हीनाचारपरीतात्मा प्रेत्य चेह विनश्यति । आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गा अखिलाः सपक्षाः । काम्प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः । दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेवच । आचारात्फलते धर्म्म आचारात्फलते धनम् । आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् । अथाचारान्प्रवक्ष्याम्याचाराल्लभते धर्म्ममाचारादेव धनमाचारादेव सुखमाचारादेव मोक्षमाप्नुयात् । विद्याविनाशे पुनरभ्युपैति ज्ञातिप्रणाशे त्विह सर्व्वनाशः । कुलापदेशेन हयोपि पूज्य" इत्यप्याहतुर्वसिष्ठगौतमौ । इत्थञ्च यथोक्तपातित्यापादकारम्भरंहसामुत्प्रेक्षागोचरास्तर्कास्तज्जातीयक्रियास्वेव मानं नातज्जातीयास्वैकान्तिकास्तु एतेन सागरयानहूणादिविषयपर्य्यटनयोः परार्थभूतधर्म्मात्यन्तिकप्रच्यवनम्प्रति निरपवादहेतुतया न तत्र ब्राह्मणादिभिः श्रेयस्कामैः "शुभाशुभाभ्याम्मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया

शुभे पथि । पौरुषेण प्रयत्नेन लालयेच्चित्तबालक"मिति भगवत्याः श्रुत्या मातापितृसहस्रेभ्योऽप्यतिवेलं वत्सलतरायाः परोपदेशमनुसन्दधानैः कदापि वर्त्तितव्यम् ।

एके तु विंशीं त्रिंशीं चान्तरावत्सराणां वाङ्गाः किल सुरेन्द्रनाथज्ञानेन्द्रमोहनप्रमुखाः नेपालमहाराजामात्यजङ्गबहादुरनामा चेतरे कतिचिद्दक्षिणापथालङ्कारभूतास्समुद्रवाहनेन लण्डनपुरीम्प्रतस्थुः दीर्घकालं तत्रोषुः कीर्त्तिञ्च लेभिरे १ अधिगतकलावैशारद्या ह्युत्तीर्णशिविल्सर्विस्पुरोगमपरीक्षणपरप्रस्थाना यवनपारसीका महापरिषद्युत्तमप्राड्विवाकपदभागिनो भूत्वा नूनं ते ब्रह्मक्षत्राद्युत्तुङ्गश्रेणीः प्रशासति एधिष्यन्त एव प्रत्यब्दमनुकूलाधिकारविन्यासविशेषैः २ तदाननैकनिरीक्षकतया प्रतिप्रत्ययमूनव्यासङ्गसम्भारैः पराहण्यन्ते प्रबुद्धाधियोऽपि तदुन्नतश्रेणीकाः ३ जापानजानपदाअपि यवनपारसीकादिव देवोक्तपरीक्षास्वर्जितप्रतिष्ठाश्चरितार्थाश्चानुभूयन्ते ४ भारतवर्षीया हन्त तत्र हतभाग्या असम्भाव्यधर्म्मनिर्बन्धैः कारागारैकनिर्बद्धाः सन्तो द्वीपान्तराभिगमनगोचरमुधावादास्सञ्जीर्यन्ते । हा वयं कदा किलास्माद्बन्धनान्मुच्येमहीत्यालपन्ति ५ तदेतदपलाप्यते । तथाहि नोदीरितवाङ्गादयो द्वीपान्तरं नागमन्निति वदाम अपि त्वपरिशीलितधर्म्मादीतिकर्त्तव्यता का अपरामृष्टव्यावहारिकसमयसंयोजनाः कौतुकविशेषाश्लिष्टक्लिष्टचेष्टाका एव प्रवर्त्तयाम्बभूवुस्तत्रेत्यनुजानीमहे। प्रागपि गमनादुन्मुक्तवर्णाश्रमाचारा अवर्त्तन्त एव ते । ख्रिस्तवर्त्मानुवर्त्तिनीभिर्विलासिनीभिः कृतसम्पर्का अप्यभूवन्नित्याकर्ण्यते हि। अपि ते सम्बभूवुर्बहिष्कृतप्रायाः । पित्रादिभिरप्यप्रवृत्तभाषणादिप्रचाराः किमङ्ग पुनः प्रत्यागमनादुत्तरकालं गतिस्तेषाम् । एवञ्च इहामुत्र प्राप्तव्यप्रत्यनीककीर्त्तिर्वा किमात्मिका कौटुम्बिकानन्दाप्रदायिसम्पदः किम्पदाः सन्मार्गासञ्चारिताप्रज्ञा वा कि-

म्पन्ना । "यौवनन्धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टय"मिति वाक्योदाहरणभूमिरमीहि । जङ्गबहादुरप्रभुणाऽप्यार्य्यवर्षप्रकृतीनामनवच्छिन्नसन्तापचयापनोदिनी का नु समुद्भाविता लौकिकी प्रक्रिया कानुवा सन्तोषपारम्परीप्रयोजिका किन्तेन कलाकौशलमभ्यात्तं तेभ्यः । कोवा तत्र निजपरराज्याभ्युदयहेतुभूतसमाधानातिशयः समर्थितः । के ह्युत्तरकालीनतद्वोपनौपयिकसंविद्विशेषाः समासादिताः । किन्तत्र पार्लमेण्टमहासभासभास्तारकोटिकतयाऽऽत्मानमन्यं वा भरतवर्षीणमण्डलेश्वरमितरं वा मन्त्रिजनवर्गीणमुदारधियममन्दपरिष्कारहेतवे नन्वशेषार्य्यवर्षीयव्यवहारप्रस्थानानामनुमोदयितुमयाचिष्ट । अधिप्रजं भरतवर्षे विनिवेशितानन्तदुर्भरकरावलीनिर्हारमृजूकरणं वाऽयाचत । साभिप्राययाच्ञायां कुर्वद्रूपफलापत्तिः कतिपयकालमर्य्यादया वा सम्भवन्ती महतीरपि व्यथा अपह्नुणुयादेवाविघ्नम् । न वा वणिग्गणव्यापारप्रस्थानविनष्टि परम्परोपन्यासपूर्वकतदपवादकव्याख्यां वितेने न वा वर्णाश्रमिणामेकामपि व्यक्तिं वाऽऽदद्यात्त्रिस्तमत इतीदमादिकया समयबन्धनिबन्धिन्याकारयामास कामपि व्यवस्थां तत्सभातः नाभिप्रेतमेकं वा निरूपितानामभिप्रेतं वा अभिप्रेतमपि सामग्रीवैकल्याद्वा साकल्येऽपि तस्याः सम्प्रयोगाभिमानहीनत्वाद्वोपेक्षितमित्याद्यनुसन्धीयतामनुमानविशारदैः । नह्यन्यकल्पनासमालिङ्गितपुरुषप्रयत्नसाधारण्यमतिशयितायां व्यक्तौ मन्यामहे न्याय्यम्- एवञ्च सर्वमसम्प्रातिपन्नमेव प्रतिक्षणोपारूढया तन्महत्त्वानुकारिकमनीयकर्म्मणः समीक्षयाऽर्कफलोपभोगप्रत्याशासङ्काशतया महतोऽपि प्रस्थानम् । किमुत यथोक्तानामनुक्तानाञ्च स्वोकगतीनाङ्गतिरिति ज्ञायतां तावत् । सिविल्सर्विस्संस्थुत्या किलार्य्यवर्षे न भवितव्यमाङ्ग्लराजधान्यां लण्डननाम्न्यामेव भवितव्यमित्याद्याग्रहप्राग्भारस्य हि निदानस्य चिन्तयितव्यत्वात् तथा

हि भरतवर्षे तत्परीक्षणानुमोदने परीक्षादातॄणां द्रागेवैधिष्यत एव सङ्ख्या द्वीपे लिङ्ग्लण्डात्मनिधर्म्मादि प्रबलप्रतिबन्धभियातन्नगरीम्प्र जिगमिषेयुः तेन चाल्पसङ्ख्याकानामेव प्रेक्षावतां पर्य्यवस्येदुपद्रवः। भारतवर्षे त्वनुज्ञायाम्प्रतिगेहन्ते अनुभूयेरन्नित्यनिष्टम् इष्टञ्चैतदार्य्यवर्षीयाणामनधिकृताधिकारत्वम्। अधिकृताधिकारत्वं त्वाङ्ग्लानामेव निरवद्यतया स्वैर्न्निरणायि। निरमायि च स्वेभ्य एव प्रकृष्टपरीक्षाकिलानन्यगतिमत्ताभिप्रायपूर्वकम्। तत्र हि पारसीकादीनामप्यापाताधिकारापादनमात्रमनुमीयते दुरन्तविवादप्रत्ययधारोपशमकृते कतिपयकालावधि यावन्निजनिरवच्छिन्नप्रभुताऽनुपालनविकाराभावस्तावदेव तत्परीक्षाप्रसारतत्प्रयोज्याधिकारवितरणादिनियमश्च पालयिष्येते तत्परिषदेति। यदा हि ताभ्यां विपर्य्ययपरिणामप्रभवप्रातिकूल्यावभासस्तदा तदुत्तरक्षण एव तयोरुपसंहारः स्वायत्त एव कृत इतीङ्गितज्ञैराकलनीयम्। आर्य्यवर्षीयाश्चेत्स्वनिबन्धान् निर्बन्धाँश्चातिलङ्घ्योत्तरोत्तरमधिकाधिकसङ्ख्याका ब्राह्मणादयो नातःपरं स्वीयपरकीयसमयानुसारिणस्तर्हि तदैव ते प्रतिरुद्धा भवेयुः सङ्कोचविकासौ हि स्वाधीनौ नैवंविधान् विधातुवशेन व्यापार्य्येत इति। एवञ्च परीक्षायास्तस्या अन्यस्याश्च तज्जातीयप्रक्रियाया गुडजिह्विकयैव प्रवृत्ततया नस्थायित्वाभ्युपगमः। वस्तुतस्तु सिविल्सर्विस्परीक्षा अन्याश्च भेषजादितत्त्वग्राहिकाः सत्यां सम्भावितानां वाणिजानाञ्च सामन्तानां सोपपत्तिकाभ्यर्थनायामाहङ्कारिक्यां न ताः परीक्षाः न सा साङ्ग्रामिकी कला न तदन्यत्परीक्षणमन्यादृशार्थयोग्यताकमिहैव भारते वर्षेऽभ्यनुज्ञायेरन्नभिप्रचारयितुमिति न मन्महे। नहि बालधिषणाविद्यार्थिनः स्वार्थभूतमपीममर्थमर्थयितुमन्ये वा किंचिदधिकधर्म्माणः पर्य्याप्ताः अपितु बालधिषणा एव यथोपन्यस्तानामथसमष्टिर्वा तेषाम्। नहि विश्वजनीनाव्यवस्था व्यक्तिरेकतमाभिर्व्यक्तिभिः कुहस्वित्कृतप्रस्थाना

सती हि व्यक्तिरेकला सती न स्वार्थनिर्वर्त्तनसमर्था । नह्येकस्तन्तुः सुदृढोऽपि समर्थो बन्धने तत्कूटं तु शक्ष्यत्येव तत्रेति व्यक्ततरम् । तदाऽप्ययुक्तियुक्तं व्यापारयेयुस्तर्हि कार्य्याक्षमम्पर्य्यवस्येत् । तस्माद्यथोक्तसामन्ताद्युन्नेष्यमाणाभ्यर्थनयैव तदादिपरीक्षाया भरतखण्ड एवानुमोदनसम्पादनगोचरया प्रामाणिकया च भवितव्यम् । तदपि चेदसिद्धप्रायं मन्येत तद्द्वीपगमनं वाऽसम्पन्नस्वार्थाभ्यर्थनानां ब्राह्मणादीनामन्याय्यं तर्ह्यापद्येत । तत्र हि क्रियाहीनमेव वाग्व्यापारं सन्तमभिभावयेयुस्तर्ह्यतिप्रसक्तिर्दुरुद्धरैव । न च नालिकार्थवादिता मुधा समाश्वस्ततावाऽस्मास्वस्ति पारसीकादि तदादिपरीक्षाविषयोत्फुल्लप्रवृत्तीनाम्फलिनीनामद्धोपलम्भादिति भणितव्यम् । स्वेभ्यो विधर्म्मत्वाद्व्यवहारतश्चोक्तार्थासालक्षण्याभावाच्च । न ते तेभ्योऽमृतायन्ते युष्मभ्यं वा विषायन्ते परमत्र वैषम्यापादकं त्वन्योन्यस्मिन्वैधर्म्म्यमेव दुरुद्धरं नचेतरत् । भेदकसामग्रीत्वेन भासमानानामप्यनेकेषां धर्म्मवैजात्यमेव भेदकतरम् । तद्धि प्रमुखीकुर्वाणाः प्रतिवर्गीणा न केनचिद्भङ्ग्यन्तरेणान्यथयितुमत्रकल्पंते स्थितिस्थापकसंस्कारस्थानीयत्वात्तस्य । यद्यपि राज्यसत्तान्ततः पार्थक्येन प्रयुञ्जानाः प्रतीयन्ते प्रभवः साम्प्रतम् परमेतत्कथनायैवालम्बाह्यतः नत्वाचरणाय निश्छलम् । आन्तरीभिर्विचारणाभिः स्वधर्म्मसत्तामुत्तेजयितुमुद्यतमाणाः सम्मीयन्ते अपह्नुवाना अपीममर्थं क्रिया केवलमुत्तरमिति शृण्वानैः किमिति विश्वस्येरन् । नैवहि सर्वथा । एवञ्च यवनपारसीका अपि तद्वितीर्णाधिकारा एव न निजसदनसम्पन्नाधिकारसम्भृताः कथञ्चिद्वोभयोः पक्षयोः पारवश्यासहनमभिप्रेयमाणं गम्यते तर्ह्येकान्तरितसत्ताऽसहनमपेक्ष्यानेकान्तरितसत्ताऽसहनप्रसक्तौ तदुपायानुष्ठाननिर्भरप्रयासैरुक्तसामन्तादिभिर्भवितव्यमुदाहृतप्रकारावलम्बिभिः सानुग्रहैः साग्रहैश्चेति पारसीकादिप्रचाल्यमानाकलिताधिकार-

विषयाः शङ्काः परिहरणीयाः । उदयनिदानोपायानामसङ्कीर्णोपायतमं ह्यैकमत्यम् । सैषा सम्पत्तिरार्य्यवर्षे भूयसीभिर्वर्षपरम्पराभिरदृष्टचरी । आलस्याद्यमित्रसन्ततिरनुच्छेद्या । मूलीभूतयोरनयोः प्रहाणमृतेनेतरा सम्पदापाततोऽनुभूयमानाप्युद्दिष्टमहाफलायावकल्पते । तदभिसन्धिमन्तस्तत्त्वतस्तर्हि ते एवास्थाय "कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पत" इति तन्मयतामाभजेयुः विचारान्तराण्युत्सृजेयुः प्रकृष्टतरार्य्यमर्य्यादां नोल्लङ्घयेयुः द्वीपान्तरादिप्रयाणयोजनपरान् विचारानवस्थापयेयुः। आलापविलापादीनस्थाने योजितप्रायान् दर्शितप्रधानप्रत्ययमधिश्रित्य साभिप्रायं मुञ्चेयुरित्येवमाद्येवादिशामो नतु विधान्तरमुपदिशामः । एतेन पारसीकाद्यधिकारादिविषयाः कक्षाविशेषास्त्वकिञ्चित्करतया प्रत्याख्यातव्या एव वेदितव्याः । जापानजानपदगोचराऽप्युत्प्रेक्षा ह्युक्तवदेव विचारास्पदतया प्रत्युक्ता ज्ञातव्याः यावन्निजनिबन्धनिर्बन्धसम्बन्धस्तावदेव स्वस्त्ययनं नेतरथा अपरथा प्रवर्त्तमाना अभूमिरेव कस्यचिदपि व्यवस्थानस्येत्यव्यवस्थितमानवास्सर्वाभ्योऽपि श्रेणीभ्यो भवेयुर्बहिर्भूताः । नहि बहिर्भूतश्रेणीनामन्यादृशो वा नियमबन्धः कतिपयकालव्यापी सुस्थात्मा वा संभवति अव्यवस्थितत्वादेव । नहि द्वीपान्तरगमन निर्बन्धं बन्धनभूतमनुदयहेतुं वा ब्रूमः अपि त्वसम्प्रतिपन्नतद्गोचरप्रयत्नानेवाप्रत्यूहं स्वस्वरूपहानिप्रयोजकाननुजानीमहे यथाश्रुतम् "शास्त्रं हि वत्सलतरं मातापितृसहस्रत" इति मार्कण्डेयमहामुनेर्वाक्यमुक्तार्थप्रत्यायकमनुचिन्तया नादुर्वासनाभ्यो दुराचारेभ्यश्च वर्णाश्रमिबहिर्भूतमानुषाणां मार्गद्वयप्रच्यवनप्रयोजकेभ्यः कदा मुञ्चेम करुणाम्बुधे महेशान इत्युपरम्यतां तत्र तत्र सदैव श्रेयस्कामैः । यद्यपि समस्तवसुधामहायात्रायाः प्रभूतयोग्यताविशेषसम्पादकत्वमभ्युपगच्छामोऽसति निर्णीतप्रामाणिकप्रत्यवायाभावे सति च शास्त्रानिन्दितव्यवस्थास-

द्भावे तद्यात्रा निर्वर्त्तनमहोद्यममभ्यनुजानीयामस्तथाप्यलौकिक-कलाकलापस्याभ्यर्हिततमस्य भारतवर्षैकप्रचारनियततयाऽन्यत्र तदसम्भवः लौकिककलाविलासिन्यस्तु विविधचेष्टासभाविष्टतया-कुदृष्टिकण्टकितविकारसहस्रसमास्कन्दिततया च क्षणप्रभासहोदर-श्रीका विविधविषादानलज्वालामूलाश्चापातरमणीयतरास्तत्रत्या इति न तद्गोचरामपि लालसामप्रतिबद्धकार्यसम्पादनीं सम्पश्यामहे । द्वीपान्तरीणाः कूटभृतो नोत्कृष्यन्ते हिमालयविन्ध्यादिभ्यः आकरवरा अपि तत्रत्या नात्रत्येभ्यो हिमालयाद्युपकण्ठनियतेभ्यः प्रशंस्यन्ते । नद्यस्तत्रत्या नात्रत्याभ्यो भागीरथीगौतमीप्रमुखाभ्यः प्रबलायन्ते । नहि तत्रत्यानि सरांस्यत्रत्येभ्यो मानसादिभ्यो विशिष्यन्ते नापि तत्रगा महीरुहा अत्रत्येभ्यो भूमीरुहेभ्यो वरायन्ते नापि तत्रोत्पद्यमाना ओषधिवनस्पतयोऽत्र जायमानेभ्यस्तेभ्योऽतिरिच्यन्ते । नापि पुनस्तद्भूमियोनयो गुल्मवल्लीमुखा इहत्याभ्यस्तद्व्यपदेशभागिनीभ्यः प्रभूतगुणायन्ते नापि तद्धरित्रीप्रभवा कुञ्जरतुरगगोमहिष्यादय इह प्रभवेभ्यस्तदादिचतुष्पदेभ्योऽतिशेरते । नापि पुना राजप्रजास्तत्रत्या ह्यत्रत्याभ्योऽधिवर्त्तन्ते यमंशमाश्रित्यातिशयोद्भावनं न सोऽतिशयोऽपि त्वाभास एव रजस्तमोभ्यामभिभूतत्वात्परिणामे स इति विप्रकृतप्रकारप्रत्यासत्तिमास्थाय तेषां मन्यतां तावत् सुमतिभिस्तारतम्यपरिज्ञानशलाकैरित्यलमतिपल्लवितेन ।

कतिपये तु "जीविका यत्र रुचिरा स्वदेशोऽसौ विधीयते । यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः । यत्र देहसुखन्नास्ति न तत्र दिवसं वसे" दित्यादिप्रामाणिकवचांसि सन्ति भूयांसि महतामपि प्रवृत्तिरेवम्प्रकारैव कालत्रये "अथातो दीर्घजीवितीयमध्यायं व्याख्यास्याम" इत्युपक्रम्य प्रवृत्तचरकार्य्यवचांसि शारी-

रमहोदयनिरूपणपराण्येव सन्ति न द्वीपान्तरगमनं प्रतिषेधन्ति भिद्यन्ते ह्योषधिवनस्पतयः प्रतिद्वीपम्। उपयोगस्तेषामामयभेदान्न द्रष्य एवातुराणाम् महार्हा मण्याद्यर्थाः सर्वैरिष्यन्त एव तत्कस्य हेतोर्द्वीपान्तरगमनादिरोधकं प्रकरणजातमिति विवदन्ते तदसारं तथाहि नद्यादिमाभ्यां वाक्याभ्यां स्वार्थाभिसन्धायकता द्वीपान्तरे क्कुत्रचित्कदाचिद्वाचोभङ्ग्या गम्यते अपि त्वत्रैव व्यवस्था जीविकादिगामिनी यथायोगं निगद्यते विनिगमनायां द्वीपान्तरेऽपि साऽभिमन्येत तदा रोचकवाक्यानां प्रवृत्तिर्हीयेत विधिवाक्यमेकं वोदाहर्त्तव्यम्। न कुत्रापि तदाकलनम्। परिशिष्टसमस्तार्थविधायीनि वाक्यानि कुप्येरन् श्रौतानि स्मार्त्तानि च तत्तान्यनुपमृद्यमाङ्गलिकजीविकास्तुतिपरे एव वाक्ये ते अवगन्तव्ये तात्पर्य्यनिर्णायकप्रकरणस्याविस्मर्त्तव्यत्वात् अपरथा कयाचिद्व्यपेक्षयाऽऽपन्नं पदमन्यार्थपरं नीयेत। अप्राकरणिकार्थप्रसक्तौ वाक्यार्थानन्वयविधया वक्तुर्योजयितुर्वा वक्ती रमणीयैव माननीयप्रज्ञस्यापतेत्। स्वावेशमेव जानाति केवलं मन्दधीरिति सङ्गमयति वाचम्। एवञ्च सतां वर्त्तनमशेषार्थसमन्वयपूर्वकमेव कालत्रये नत्वपार्थगत्येत्युन्नेयम् प्रथमाम्प्रतिज्ञामुपक्रम्यापरिसमाप्तेर्देशकालसलिलानिलवयोविशेषानुपलक्ष्य प्राणिनः प्रत्युपदिशता चिकित्सां प्रतिपिण्डनिदानमालोच्यैव चरकाचार्य्येण विहिता सा कथमन्यतमदेशीयस्य ततोऽन्यतमदेशादि विशेषाननुक्रमतयोपलक्षयेत्। नहि शैत्यप्रधानप्रान्तजन्मा जीवो मनागप्यौष्ण्यभूयिष्ठे शैत्योपचारानृतेऽवस्थातुमीष्टे कश्चित्। एवमन्योन्यं समुदाचरत्प्रकृतिविन्यासादयः कथमभेदप्रतीतिमाभिदध्युः नाडीं नाडीम्प्रति नायन्नायमुज्जृम्भते प्रभञ्जनो निजवाहिकान् प्रतिनियतदेशादिवैचित्र्यसम्मीलितानवरतम्। अमुयैव दिशा शारीरश्रियमनुभावयन् कथमार्य्यवर्षीयाणामनार्य्यवसतिविशेषपुरोगमान्प्रतिकूलप्रायानभिप्रैति वैद्या-

चार्य्यशिखामणिः । अमुकामयविनिर्म्मोकायाप्रयोजकं भारतं वर्षं द्वीपान्तरं हि तत्त्वेन सेवितव्यमिति वदद्वाक्यं न किञ्चित् पश्यामः। द्वीपं द्वीपं भिन्ना अप्योषधिवनस्पतयोऽभिन्नं व्याधिमसमर्थाः क्षपयितुमिति वा न काऽपि प्रतिज्ञा। अपितु तदसम्पत्तिसन्देहविरहो वनारण्यविस्तरेषु हिमवद्विन्ध्यरैवताचलार्बुदाचलाद्यनेकभेदभिन्नेषु सर्वदा सर्वथैव। किञ्च महाकुलाचलतया जगतीतले हिमवानेव प्रथीयान् तदनुविन्ध्यादयोपि तथा यज्ञियदेशतया सारिष्ठानामोषधिवनस्पतीनामिहैव त्रैकालिकप्रभवसम्बन्धसम्भवात् "तेषाङ्कुरुक्षेत्रं वेदिरासीत्। तस्यै खाण्डवो दक्षिणार्द्ध आसीत् तूर्घ्नमुत्तरार्धः परीणज्जघनार्द्धः मरव उत्तर" इत्याद्याः श्रुतयोऽत्रानुकूलतराः देवानां सत्रमहायागप्रसङ्गमनुकूलयन्त्यः "तृतीयस्यामितो दिवि सोम आसी" दिति श्रुतिसिद्धद्युलोकावस्थानमहाविभूतिः सोमवल्लीद्युःस्थानप्रतिनिहिततया भारते वर्षे यज्ञनिष्पादनायावतारिता विश्वसृजा प्रकृष्टाध्वरप्रस्थानविलोपवशात्तस्याः प्रचारबाहुल्यप्रसक्तिमाकलय्य "यदि न सोमं विन्देत पूतीकानभिषुणुया" दिति श्रुतिः सोमाभावे पूतीकव्यक्तीः प्रतिनिधातव्यतया विदधती तदाद्यलौकिकलताविशेषभूमितया भरतखण्डमेवाभिधत्ते नहि सोमः कुत्रचित्कदाचित्खण्डान्तर आसीदस्ति च। शौर्य्यधैर्य्यपराक्रमादीनां षण्णवतिलोकोत्तरगुणानां योनिः सोमः पातारस्तस्यर्त्विग्यजमाना ब्रह्मक्षत्रसत्तमास्तावद्गुणमन्दिरतया प्रथिताः तावदौन्नत्यमनवच्छिन्नं भारतवर्षस्यानुभविकम्। सम्प्रति परिशिष्टानन्तौषधिमहामण्यादिसत्ताया योजकदौर्लभ्यमालक्ष्य प्रयोगाविषयत्वेऽपि नोच्छिन्नाः स्थानतः। तथाच समस्तं वस्तुबीजात्मना व्यवतिष्ठत इत्यणोर्म्महतो वाऽर्थस्याप्रतिपत्तये नाश्रयितव्यं खण्डान्तरमिति दिक्।

नहि गान्धारं कांधार इति पातालं अमेरिकेति व्यपदेशभाग्भ्यो

यवनादिराष्ट्रेभ्यो गान्धार्य्यादि समाहरणमभूदार्य्यवर्षे इत्यादि चोद्यजालं साधीयः प्रतिलोमाक्षरसमाम्नायसादृश्यसध्रीचीनानां च कल्पनानां निर्मूलत्वात् प्रमाणबाध्यत्वाच्च। क्वचित् ब्रह्मक्षत्रादि विजयदण्डसमासादितयवनादिविषयेषु निजतेजोमरीचिभिरात्मीयतामापन्नेषु तेषामधिवासमूलकल्पनाप्रसक्तावपि नैमित्तिकार्थोदाहरणस्य निमित्तापायेनाग्राह्यचरतया समस्तेतरप्रमाणविचारासहतया च तदादिकल्पनमविचारोज्जृम्भितमित्युपेक्षणीयम्।

ये च केचित्कदाचित्पुरा किल क्षत्रविट्समूहा राज्यवाणिज्ययोः पराभिलीलसाभिः प्रेरितात्मानो द्वीपान्तरं सिषेविरे। तत्रैव निहितालयाः प्रच्युताशेषस्वधर्म्माणस्तत्रत्या इवाभूवन्नप्याभासकतिचिल्लक्ष्माणो गम्यन्त आख्यायिकाभिः पारसीकादि संज्ञका इति न तैरस्माकमिदानीं काचिदुन्नतिः इतोऽप्यधिकतरा दुर्गतिरिदानीं गमनप्रसक्तानामवाञ्छुखमतीनामिति सर्वतो निरोद्धव्या एवामी ज्ञातव्याः।

आसेतोराहिमाद्रेराच पूर्वपश्चिमोदधिभ्यामाप्रतीतावर्णाश्रमिणो माभवन्तु द्वीपान्तरगमनोन्मुखामनाग्वा, मा च पुनर्म्महाराजमाण्डलिकाः, मा च विद्यार्थिनो वणिग्गणा वा मा च कश्चित्पारवन्तोऽपि व्युत्पादिताशेषशास्त्रार्थमहाम्भोजमरन्दमाधुरीमिलिन्दायमानमानसाः सुहृदयाः। नन्वशेषमानुषाणामपरप्रयुक्तताप्रयुक्तत्वेऽभीप्सिते स्वगोष्ठीनिष्ठसमयमयीभिर्वाणीभिः किमितीतरे निर्बध्यन्ताम् किमिति वोपद्रवाङ्गारव्यथमानमानसान्प्रत्यनार्द्रगीर्भिरुत्प्रेक्षामात्रविषयाः फलातिशयाः प्रबोध्यन्ताम् किमिति वा पुनर्दृष्टहानादृष्टकल्पनयोरुपचरन्ताश्चराचरदीर्घदृश इति चेद्बाढमेवम् तथाप्यनाकलितलोकतन्त्रोऽत्र गम्यते पृच्छकजनः भवानेवात्र पृष्टो व्याचष्टाङ्कितात्त्विकीमर्थस्थितिमध्यवसायैवं परिचोद्यते उत तां निजेच्छानुगामितया परिचेष्टुम्। नाद्यः वस्तुनि विकल्पमात्रास-

म्भवात् । न च सामान्यतस्तथात्वेऽपि विशेषाधिगमाय विशेषविचारावतार इति वाच्यम् । सामान्यतो ज्ञातेऽर्थे विशेषविचारो यतः काकदन्तविचारणावत्स्यात् । न द्वितीयः तथात्वस्य प्रतिव्यक्तिभिद्यमानतयाऽव्यवस्थितप्रायत्वापत्तेः यद्यपि लौकिकोऽर्थः कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुमीष्टे निपुणात्मा तथापि कृत्रिमाकारात्तस्मादकृत्रिमाकारो दुष्परिहरो यथाऽग्नावौष्ण्यमप्सु च शैत्यम् कुटिलाकाराणामपि नियतत्वसम्भावनायां कौटिल्याश्रयतया तदेव हि तस्याकृत्रिमं रूपं पर्य्यवस्येत् । वस्तुतस्तु नहि केनचिल्लोके निरङ्कुशेन भवितव्यम् । न वा भवितुमर्हति कश्चित् किमिति व्यसनपारवश्यमपेक्ष्यापेक्ष्यमाणं स्वातंत्र्यं कथनीयं मतिमत्सु । उपात्तस्वांतंत्र्यास्तु सति बाधकेनाभूवन्माङ्गल्यभाजनं कदाचित् नापि च श्लाघापदमपि तु गर्हागोचरा एव सर्वविधा जीवा विहितप्रतिषिद्धव्यवहारवशंवदाः तत्फलभागिनश्च । अस्ति नास्तीति शब्दौ हि तन्नियामकौ । नह्याभ्यां शब्दाभ्यान्तदर्थाभ्याञ्च वर्जिता काचिदस्ति भाषा प्रत्ययो वा । नह्यस्ति पदप्रयोगमात्राद्विपर्य्ययप्रयोगविषयो विषयोनिर्वोढुं शक्यते । नापि च विपरीतम् । नह्युभाभ्यामतिरिक्तः कश्चिदस्ति विशेषो योऽसौ व्यवहारपथमधितिष्ठति द्वाविमौ विधिप्रतिषेधौ बोधयन्तौ व्यवस्थाङ्किल विहितप्रतिषिद्धलक्षणामुपलक्षयतः । सैषा लौकिकालौकिकभेदभिन्ना तदेवहि पुरुषहितानुशासनाच्छास्त्रमित्यभिधीयते । तच्च "शास्त्रं हि वत्सलतरं मातापितृसहस्रत" इत्यार्षाद्वचनादनतिलङ्घनीय प्रतिप्राणिव्यवस्थिताशेषमर्य्यादामहानिबन्धनं सन्न कञ्चित्प्राणिनमविषयीकरोति । नहि कश्चित्तदसम्बन्धाभिधित्सया वर्त्तमानस्तत्सम्बन्धादंशतो वा भूयान्मुक्तः । नहि मेचकानां सन्तमसान्धकारसमाच्छन्नत्वेऽप्यन्तरागवां महिमानमंशुमालिनो मात्रां वा जीवेयुः कालमहामूर्त्तेरप्स्वन्तरावर्त्तमानमीनादीनामचलेष्वन्त-

रासभश्वरङ्केकादीनाञ्च कोऽन्वन्योऽर्य्यम्णश्चेतयिता । वायुमेव चेष्टयितारं ब्रूषे तर्ह्यशेषचेष्टयितुश्चेष्टयिता निश्चेष्टः परिशिष्यते पर एवात्मा । एतेन परमात्मपारवश्यमशेषाणामिष्टतममनपनोद्यञ्च सिद्ध्यति तदा "श्रुतिस्मृतिसदाचारा आज्ञारूपा हि मे मताः । आज्ञाच्छेदी मम द्रोही स याति नरकं सदा । निश्वासभूता मे विष्णोर्वेदा जाताः सुविस्तराः । अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष"मिति श्रुतिस्मृत्यादयस्तदनुशिष्टास्तत्प्रतिनिधिभूतास्तद्वदेवाचरन्ति वक्तृवचनयोरनन्यप्रतिपत्तिवदित्यध्यवसातव्यम् । नहि वक्तृपराधीनानामतद्वचनपरायत्ता असति प्रबलप्रतिबन्धके भवेयुः सुस्थात्मानः । एतेन शास्त्रपारवश्यमीश्वरपारवश्यसममास्थेयम् । एवञ्च न स्वगोष्ठीनिष्ठसमयमय्यो वाचः किंविषया इति क्रुधं माकृथाः । ये हि महान्तोऽपि जानन्तोऽप्यद्यूतखेलनादिनियतिमतिलङ्घ्याम्बभूवुर्युधिष्ठिरादयो न ते कथञ्चित्तत्फलभूतगिरिकाननाद्युत्कटप्रवासजन्मनो मुक्ता बभूवुर्दुःखात् । उपलक्षणमेतद्विहितानुष्ठानातिक्रमणमात्रस्य निषिद्धाचारगोचरप्रवर्त्तनासामान्यस्य च किमुतार्वाचीनानामर्वाचीनविचारावधीरितसदध्वनामिति ग्रहणीयम् । राजानो राज्यागमप्रशस्तिभिर्न्निबद्धाः प्रजाः किल स्वस्वनियोगानिर्वर्त्तनप्रत्ययायत्ताः महर्षयः परमार्षदर्शनप्रयोगयोग्यताकतया प्रख्याताः । आचार्य्याः किलान्वर्थाभिधानतया "आचारङ्ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिम् । आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मात्तमाचार्य्यं विदुर्बुधा" इत्यादि नैरुक्तादि प्रमाणनिर्णीतपरापरधर्म्माणः प्रकीर्त्यन्ते । शिष्याश्च शासनीयप्रामाणिकाभिधेयेष्वद्विष्टसाधनताग्रहानुकूलाः संक्लृप्ताः पित्रादयः पितृधर्म्माव्यभिचरितव्यवस्थाकतयाऽऽबद्धाः पुत्रादयः स्वेति कर्त्तव्यताविलोपनिजोद-

यालम्बितयाऽनुबद्धाः एवमितरेऽप्यात्मकर्त्तव्यतालक्षणविधानैक-निर्बद्धकरणव्यापारा अप्यन्यथाऽनुवर्त्तनप्रत्यायिताः पर्य्यायेण वा स्वार्थसमाधानेभ्यो विहन्यन्ते लोका इति स्वक्रियाहानिरेवा-विधिविषयवर्त्तनविशेषफलमध्यक्षमीक्ष्यते। नहि रूपादिनियत-विषयविषयाणीन्द्रियाणि चक्षुरादीनि नान्योऽन्यविपर्य्ययप्रवर्त्त-नावन्त्यालक्ष्यन्ते कदाचित्। न हि महाभूतान्यब्धरित्र्यादीन्या-पादि वा स्वेतिकर्त्तव्यताः परिवर्जयन्तीतरकर्त्तव्यतामुपाददन्ति दृश्यन्ते "अब्धिवद्धृतमर्य्यादा भवन्ति नियताशयाः। नियतिं न विमुञ्चन्ति महान्तो भास्करा इवे"ति वचनपरिप्राप्ताम्बुनिधे-रनवच्छिन्नमर्य्यादानुपालनक्रियासामान्योपमिता महान्तः प्रस्तू-यन्ते। नहि चतुष्पदः स्वसंक्लृप्तचेष्टाविशेषलक्षणं ननु ऋतुकाले-तरकालानभिगमनाद्यतिवर्त्तन्ते बलातिशयपुरोगमैर्य्यादृच्छिकहेतु-भेदैरुपलक्षिता अपि न निजनियमेभ्यो भ्रश्यन्ते च। नहि मही-रुहवल्लीमुखाः स्थिरलोकवर्गीणा अप्यसङ्कीर्णनिजमर्य्यादाः स-त्योऽस्मात्प्रकारान्तरं भजन्ते। तथाच समस्तेतिकर्त्तव्यतानियमा-तिशयलक्षणब्रह्मचर्यसमास्पदैः सर्वैरेव भवितव्यम्। यथाचाऽथ-र्वणश्रवणानि "ब्रह्मचर्य्येण तपसा राजा राष्ट्रं विरक्षति। आ-चार्य्यो ब्रह्मचर्य्येण ब्रह्मचारिणमिच्छते। ब्रह्मचर्य्येण कन्या यु-वानं विन्दते पतिं। अनड्वान् ब्रह्मचर्य्येणाश्वो घासञ्जिगीषति। ब्रह्मचर्य्येण तपसा देवा मृत्युमपाघ्नत। इन्द्रो ह ब्रह्मचर्येण दे-वेभ्यः स्वराऽभरत्। ओषधयो भूतभव्यमहोरात्रे वनस्पतिः। संवत्सरः सह ऋतुभिस्ते जाता ब्रह्मचारिणः। पार्थिवा दिव्याः पशव आरण्या ग्राम्याश्च ये। अपक्षाः पक्षिणश्च ये ते जाता ब्र-ह्मचारिण" इत्यादीनि। ऋजुरक्षरार्थः नात्र ब्रह्मचर्यशब्दः उ-पस्थसंयमवचनः अपि तु प्रतिप्राणिव्यवस्थितेतिकर्त्तव्यता सामा-न्याप्रमदनस्यानितिकर्त्तव्यता प्रसञ्जनाभावस्य च वक्ता ब्रह्मेति

जातिशब्दो भावप्रधानश्च बृहिवृद्धावित्यस्मान्मनिन्प्रत्ययान्ताद्रूपमभिजायते तस्य ब्रह्मणः चर्य्यं ब्रह्मचर्य्यं। तथा च चातुर्वर्ण्यचातुराश्रम्ययोर्य्यथायोगं निषेकादिश्मशानान्ताः ब्राह्ममुहूर्त्तारम्भप्रदोषसमयसमापनीया नित्यनैमित्तिककाम्यनिषिद्धक्रियाप्रघट्टिकाः परब्रह्मयाथात्म्यं चावबोधयन्नवगम्यते वेदः। तत्प्रतिपाद्यसन्नियतेतिकर्त्तव्यताविशेषलक्षणमविगीतव्यापारपरम्परासमवेतत्वमभिनिष्पन्नार्थः तथा चोक्तनियमातिलङ्घने साहसिकताऽवसीयमाना दण्डार्हतैव तद्वत्तामवधारितम्। नहि नियमातिवर्त्तिभिः कश्चिदर्थः प्रतिष्ठाप्यते प्रत्युत परमेश्वरसेतुभेत्तृतया समस्तसन्मार्गसमुच्छेदकानां कुतो नियमानुपालनमिति निर्बन्ध एव प्रत्यर्थमवधार्य्यतां तावत् दुर्हृदयैः। पुरुषव्याघ्रा एव पुरुषार्थान् यथोक्तलक्षणान् साधयेयुः नतु कदाचित्पुरुषगोमायवः। अधर्म्माचारमहाङ्गारपीड्यमानमानसानां निगमागमादि निर्दिष्टाचारजाह्नवीमहाह्रदावगाहनमृते न मन्वन्तरेऽप्यापन्नतापत्रयोपशमः न वा यथार्थफलावाप्तिप्रत्याशा किमुत सदर्थसत्फललवावेक्षणं स्वप्नेऽपीति संक्षेपः।

ननु "द्विजस्याब्धौ तु नौयातुः शोधितस्याप्यसङ्ग्रह" इति पौराणिकोक्तिमनुकृत्य "प्रत्यन्तदेशगमननिमित्तपुनःसंस्कारे कृतेऽप्यब्धौ नौयातुः संसर्गः कलौ निषिध्यत"इति संस्कारकौस्तुभकारादिनिर्णयैदम्पर्य्यपर्य्यालोचनया कृतप्रायश्चित्तानामप्यसंव्यवहार्य्यता कथमवकल्पतामिति चेन्न। अस्वमनीषिकातन्त्रत्वात्तथाहि "गवार्थे ब्राह्मणार्थे च प्राणत्यागः कलौ न हि। द्विजानां गोपशूद्रादौ भोज्यान्नत्वं कलौ नहि। शिष्यस्य गुरुपत्नीषु न चिरं वासशीलता। आपदि क्षत्रवैश्याभ्यां वृत्तिं विप्रः कलौ त्यजेत्। कलौ द्विजो नहि भवेदश्वस्तनिकजीविकः। द्वादशाब्दं गुरौ वासं मुखाग्निधमनक्रियाम्। यतेर्भिक्षां सर्ववर्णे कलौ त्रीणि विवर्जयेत्।

नवोदकनिषेधश्च दक्षिणां गुरुवाञ्छिताम् । वृद्धरुग्णादिमरणं जलाग्निपतनादिभिः । गोतृप्तिमात्रे भूयिष्ठे पयस्याचमनक्रियाम् । पितृवादे साक्षिदण्डं कलौ पञ्च विवर्जयेत् । घृतदुग्धादिभिः पक्वमन्नं शूद्रात्कलौ त्यजेत् । भिक्षामटन् यती रात्रौ न वसेद्गृहिणाङ्गृहे । विधूमसन्नमुसले काले भिक्षाङ्कलौ त्यजेत् । चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्य्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । सन्न्यासश्च न कर्तव्यो ब्राह्मणेन विजानता । त्रेता परिग्रहः सर्वाधानं । अर्द्धाधानं स्मृतश्रौतस्मार्त्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानन्तयोरैक्यकृतिः पूर्वयुगाश्रया । समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासु कन्यासूपयमस्तथा । देवराद्यैः सुतोत्पत्तिर्म्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा । दत्ताक्षतायाः कन्यायाः पुनर्दानम्परस्य च । दीर्घकालम्ब्रह्मचर्यं नरमेधाश्वमेधकौ । महाप्रस्थानगमनङ्गोमेधश्च तथा मखः । इमान्धर्म्मान्कलियुगे वर्ज्यानाहुर्म्मनीषिणः । मद्यं वर्ज्यं महापापे मरणान्तविशोधनं । सौत्रामण्यादि यज्ञेऽपि सुरापात्रग्रहस्तथा । मद्यभक्षादिवामाद्या गमस्यतु नमानता । मीमांसा द्वितये सर्वे शिष्टैश्च तदनादरात् । औरसोदत्तकश्चैतौ पुत्रौ कलियुगे स्मृतौ । अन्यान् दशविधान्पुत्रान् क्रीताद्यान्वर्जयेत्कला"वित्येवमादि वाक्यशतेभ्यश्चावान्तरापवादसंसर्गभागिभ्योऽपि पौराणिकेभ्यस्तुल्यप्रत्यासत्तिकानेककार्य्यावरोधपरमोद्देशं प्रति प्रवृत्तविशिष्ट जन्मभ्यश्च साक्षादेव निषेधेऽवगम्यमाने निषेधमूलीभूतदुराचारनिबर्हणस्य च युक्तियुक्तत्वे तद्भञ्जकोत्प्रेक्षाविशेषाणामयुक्तियुक्तत्वात् । "अश्वालम्भं गवालम्भं सन्न्यासम्पलपैतृकं देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जये"दिति स्मृतेरुत्सर्गविधया ज्ञायमानाया "याव द्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । संन्यासमग्निहोत्रञ्च तावत्कुर्यात्कलौ युग" इति पराशरस्मृतेर्महापवादभूतायाः पारिव्राज्याग्निहो-

त्रयोरनुष्ठानावश्यम्भाविता विधायिन्याः प्रस्तूयमानत्वाच्च। येषां तयाऽश्वालम्भगवालम्भपलपैतृकदेवरवरणानां निषेधः कण्ठोक्तः न तेषामन्यतमस्याप्यपवादकन्तत्रचान्यत्रचाधिगच्छामो वचनं किञ्चन अतोऽपवादाभावे उत्सर्गस्यैव सम्प्रतिपत्तिर्दृढतरा। एकनिषेधस्येतरविधिनान्तरीयकत्वात्। यदि प्रयत्नेनान्विच्छंतो नचेदपवादमवगच्छेमहि निरपवादत्वान्निर्दुष्टमेव मन्येमहि तस्माच्चतुर्णान्तेषामाचारगोचराऽऽशङ्कासातङ्का। नच कलियुगीयव्यवस्था विधायिन्यां स्मृतौहि पाराशर्य्यामुदाहृतवाक्यवत्समुद्रयाननिषेधजननं न किञ्चनवचनमुपलभामह इति भ्रमितव्यं। यथोक्तनिषेधविषयाणां पञ्चानामैककण्ठ्यस्योपलक्षणविधयेतरेषामपि विषयीकरणात्। वाक्यवाञ्छायां वा। समुद्रयानगमनं ब्राह्मणस्य न शस्यते। सम्भवेद्यदि मोहेन पुनः संस्कारमर्हतीति तदीयाया एव स्मृतेः प्रसिद्धतरत्वात्। ननु मूलभूतश्रुतिमन्तरास्मृतौ कमपि निर्भरमाधातुम्प्रभवामोज्ञापयितारो वा कार्य्याकार्य्यविचारणायां कथङ्कारं स्तिमितपदाभवेयुर्विना तामिति नैषदोषः स्मृतेः श्रुतिप्रतिनिधिरूपत्वात् स्मर्यत इति स्मृतिरिति कर्म्मव्युत्पत्त्या नहि स्मर्य्यमाणोऽर्थः प्राचीनानुभूत्यविषयः स्मृतत्वव्यवहारोच्छेदापत्तेः। नहिसंस्कारमृते स्मृतिः स्वरूपसतीस्मृतेः कार्य्यभूतायाः प्रतीतिं प्रत्यनुभवस्थानीयया कारणतावच्छेदकावच्छिन्नया कया चिद्भवत्त्या भवितव्यम् सा हि श्रुतिः तस्याश्चानेकशाखाभेदभिन्नतया समुत्सन्नशाखाविशेषश्रुतीनाम्पठ्यमानशाखागतानाञ्च तासां समुच्चयविधयार्थव्राताः स्मृतामहर्षिभिः। नह्येकतमो वा निरूपितोऽर्थस्तेषां स्वोत्प्रेक्षाविषयः तथात्वे च स्मृतिरिति संज्ञाया एवानुदयापत्तेः उच्छृङ्खलार्थव्युत्पादकतार्किकनिबन्धवद्धर्म्मानुष्ठाने मनागपि ज्ञापकताप्रतीतेरनुत्पत्त्यापत्तेश्च-प्रतीयन्ते ह्युपक्रमपरामर्शोपसंहारैर्धर्म्मतत्त्वनिरूपणबद्धसन्धा एव स्मृतयः। न च हारीतस्मृतौ तप्ताङ्कनादि।

गर्हिताचारवादिनो वाक्यगणाः किलार्वाचीनधूर्तमानवैः श्रुतीरपि तत्परतयैव योजयद्भिरारचितास्तथैवान्यास्वपि निक्षिप्ता एवमादि वाक्यनिकराः किमित्याद्रीयन्तामिति साम्प्रतम् हारीतस्मृतौ गम्यमानपञ्चसंस्कारादिविषयाणां मन्वादिसमस्तस्मृतिसंवादगन्धमात्रेणापि वर्जितानां वेदवेदाङ्गमीमांसादिमर्य्यादाबहिर्भूतानाङ्क्षेपकतरताया निरपवादत्वेऽप्यन्यासु प्रागारभ्य व्याख्यात्रिशेषोपबृंहितासु प्रक्षेपानवकाशतया क्षेपकवाक्यविषयकल्पनानां निरवकाशात् । नहि परिगणितस्मृतिकाराणां संवादसमुल्लसितविषयविशेषाणां हारीतस्मृतिसंपन्नानां मनागपि संशय्यते प्रामाण्ये । न वा कल्पसूत्रैः प्रसङ्गवैरूप्याद्धस्तीकृतविषयविशेषाणां तस्मिन् परीक्षकैस्तथा । अपि त्वपरामृष्टसंवादगन्धानधिकृत्यैवाप्रामाण्याध्यवसानमन्यथाऽनुपपत्त्या दुष्परिहरम्पर्य्यवस्यति । एतेन तदादि क्षेपकवाचामप्रामाण्याभावसाधकतयाऽऽश्रीयमाणकल्पनाभेदाः केषाञ्चित् प्रत्युक्ता वेदितव्याः । सामुद्रविहारद्वीपान्तराभिगमनयोः कण्ठत उपलक्षणतो वा मन्वादीनामशेषस्मर्तॄणामप्राणिकतया व्युदसनीयताविषयत्वलक्षणसंवादभेदो यथोपन्यस्तविष्णवादिवचनेभ्यो व्यक्ततरः तथा च न केनापि स्मृतिकारेण तयोरप्रामाण्याभावोऽपि प्रतिषिद्धोऽर्थोऽनुमतो भवतीति न्यायाभासोपमर्द्दनपुरःसरमुपवर्णित इत्यास्तां तावन्नीरसशङ्कासमुन्मेषसंभ्रमः । "अथ । देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि । रक्षेदेव स्वदेहादि पश्चाद्धर्म्मं समाचरेत् । येन केन च धर्म्मेण मृदुना दारुणेन च । उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत् आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तये"दिति पराशरस्मरणानि देशोपद्रवप्रवासादि परिगणितप्रसङ्गेषु स्वदेहदारापत्यक्षेत्रवित्तादि विषयामेव रक्षामवश्यानुष्ठेयतया विदधन्ति न धर्म्माचरणस्य तथा विधेयतामवबोधयन्ति । अपि त्वापत्समयसमनन्तरमेव स्वस्थावस्थायां सति सा-

मर्थ्ये तदितिकर्तव्यतां भाक्ततयोपदिशन्ति। अधुना चापगतराज्य-
विद्याद्रविणस्थितयो भारतवर्षीया वयमिति कस्मा अस्माकम्प्रयो-
जनाय धर्म्माचरणमिति युक्तमुत्पश्याम इत्याशयवन्तो निराचिकी-
र्ष्यन्ते । तथा हि गृहग्रामयोर्दाहे दुर्भिक्षादौ च सार्वजनीनाप-
त्परम्परामनवच्छिन्नचेतोव्यग्रताविधानलक्षणामालक्ष्य तन्मोचनैक-
निर्भरप्रयोजनपरतैव तेषां न तु विहितानुष्ठानपरितित्याजयिषा-
विषयता जातुचित् असत्यां गतावन्यथानिरूपणस्यापतनमर्थानु-
कारि सन्नस्थानिन्यर्थे परमेतिकर्त्तव्यतानिरूपितयोग्यतावच्छेद-
कत्वं प्रतिबध्नात्यंशतो वा सदैव स्थानितया सन्नियतानास्थाने नि-
जभावमुज्झित्वा भाक्ततां क्वचित्कदाचिद्भजेयुः विपन्नव्यक्तीनां
प्राणरक्षाविधापि प्रक्रमान्तरसंयोजनवशादन्यथाऽनुमानमस्थानि-
कतां न जहात्येवेति न तत्र सुमनसामादरलवो लवितरि केदारा-
लूनव्यापारवदित्यवधेयम् । न हि प्रयोज्यरक्षाप्रयोजकरक्षामृते वि-
न्दते निजभावं स्वरूपेण सन्तम् । न हि प्रयोजिकां धर्म्मसत्ताम-
वस्थाप्य प्रयोज्यैः क्षेत्रवित्तादिभिः सप्रयोजनैः सप्रमाणैर्वा भवि-
तव्यम् । एतदेवाभिप्रेत्य "धर्म्मेण पापमपनुदति धर्म्मे सर्वम्प्रति-
ष्ठितं तस्माद्धर्म्मं परमं वदन्ति" धर्मो रक्षति रक्षितः। धर्मो वंशे वि-
पन्नं च त्रायते महतो भयादिति श्रुतिस्मृती निरस्तसमस्तानर्थ-
सार्थौ प्रयोजकसत्तामवबोधयन्त्याववगन्तव्ये निरपवादानुभूति-
निरूपिके युक्तात्मभिः । एवञ्चाप्तव्यराष्ट्रादिसम्पत्समीहासमाक्रा-
न्तमानसानामुपायानुष्ठानतत्पराणामुपायतमभूतधर्म्मोपेतादिकारि-
त्वमधुनातनानाम्फलाय कस्मा अभिप्रेयत इत्यभिप्रायवन्तो विवि-
च्य तत्त्वमवतिष्ठन्तामिति कृतमकृतिचिन्तया ।

ननु "वेदो धर्म्ममूलम् उपदिष्टो धर्म्मः प्रतिवेदम् ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतव" इत्यादि मनुबौधायनगौत-
मादिस्मरणेभ्यो वेदस्यैव सकलेतिकर्त्तव्यताप्रतिपादकतया ज-

१०

लधिया न द्वीपान्तराभिगमनयोर्निषेधकं वचनं वयं वैदिकमेवाद्रियामह इति। नैष दोषः "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास त१ँह जीर्ण१ँस्थविर१ँशयानं इन्द्र उपव्रज्योवाच। भरद्वाज, यत्ते चतुर्थमायुर्दद्यां। किमेनेन कुर्य्या इति। ब्रह्मचर्यमेवैनेन चरेयमितिहोवाच। त१ँह त्रीन् गिरिरूपा न विज्ञातानिव दर्शयाञ्चकार। तेषा१ँहैकैकस्मान्मुष्टिमाददे। स होवाच। भरद्वाजेत्यामंत्र्य। वेदावा एते। अनन्तावै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्वविद्येति। तस्मै हैतमग्नि१ँसावित्रमुवाच। त१ँस विदित्वा अमृतो भूत्वा स्वर्गं लोकमियाय। आदित्यस्य सायुज्य" मित्याद्याभिर्य्यजुर्ब्राह्मणश्रुतिभिः समस्तवेदावाप्तिगहनतालक्षणगाम्भीर्य्यातिशयस्य सर्वज्ञकल्पहिरण्यगर्भमनुगौतमादिनिषेवितस्य "लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति स्मृतिप्रतीततपोमाहात्म्यसमवाप्तसकलवेदार्थविज्ञानमहर्षिकर्तृकस्मृतिकुल्याप्रवहद्विषयवारिप्रस्थानान्तरमापन्नस्य स्मृतिस्थानीयकुल्यात्मनैव निषेव्यमाणस्यासम्भवन्त्यामपरोक्षप्राप्तावनन्यप्रत्त्यासत्तिकतायाः समादरणीयत्वात्। ताभ्यः प्राचीनया "अथ यो हैवेतमग्नि१ँसावित्रं वेदेति" श्रुत्या विद्याहीनस्य समृद्धफलाभावलक्षणव्यतिरेकप्रदर्शनपुरस्सरं विद्यासम्पन्नस्य सम्पूर्णफलसद्भावात्मकमन्वयं दर्शयित्वाऽन्वयव्यतिरेकाभ्यां विदुषः फलबाहुल्यमतितरां प्रशंस्य विद्यां तां प्रशंसितुमाख्यायिकां दर्शयति भरद्वाजेत्यादिना वचनजातेन। पुरा किल कदाचित् महर्षिर्भरद्वाजः समस्तानां वेदानामध्ययनमुद्दिश्य गुरुकुले वासं कृतवान्। एवं शतत्रयवत्सरान्ते जीर्णं शरीरं वृद्धं अशक्ततया शयानं तं भारद्वाजम्प्रति इन्द्रः उपेत्य उवाच यच्चतुर्थमायुः तुभ्यं दद्यां एतेन आयुषा किङ्कुर्य्याः कं किल पुरुषार्थं साधयसि इति प्रश्नसमनन्तरं स च वेदाध्ययनमेव करिष्यामीत्युवाच। ततः सर्ववेदा-

ध्ययने कृतास्थं तम्भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुमृग्यजुःसामवेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं सम्पाद्य गिरित्रयरूपान् पूर्वमविज्ञातानेव वेदानस्मै दर्शयामास। ततः तेषां वेदपर्वतानां मध्ये एकैकस्मात् पर्वतात् मुष्टिना पांसूनाददे जग्राह आदायैवं उवाच। हे भरद्वाज एते त्रयः पर्वताः वेदा एव तत्रैकैकः पांसुरेको वेदः तस्मात् अनन्ता वेदाः तेषां मध्ये त्वं एतैस्त्रिभिरायुर्भिः "शतायुर्वै पुरुष" इति श्रुतेः शताब्दपरिमितमेकमायुः तल्लक्षणैस्त्रिभिरायुर्भिः त्रिशतसङ्ख्याकैर्वत्सरैः एतत् मुष्टित्रयपरिमितं वेदजातं अन्ववोचथाः "वच परिभाषण" इत्यस्मादन्वित्युपसर्गपूर्वाद्रूपं लङि जायते। गुरूपदेशमन्वधीतवानसीत्यर्थः। अथ अनन्तरं तव इतरत् वेदजातं अननूक्तं अनधीतं एव तस्मात् सर्ववेदाध्ययनमशक्यमेव। यदि सर्ववेदाध्ययनफलमपेक्षितं तर्ह्येहि आगच्छ इमं सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्या इति। इत्थं बोधयित्वा तस्मै भरद्वाजाय एतं सावित्रमग्निं प्रागुक्तप्रकारेण उवाच। ततः स भरद्वाजः तं सावित्रमग्निं ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयं अमृतः देवो भूत्वा वर्त्तमानदेहादूर्ध्वं स्वर्गम्प्राप्य तत्र आदित्यसायुज्यं प्राप्तवानिति तद्वाक्यार्थः। न च तत्र वेदानामानन्त्येन भुज्व्याद्युपाख्यानवदितरा अपि विधिप्रतिषेधचोदनास्तदेकतमवेदशाखायां स्युरेव सर्वशस्ततो नो विचारविषयाब्धियानादिसिद्धिः सूपपादेति न्याय्यम्। निःशेषवेदान्तर्गताशेषविधिप्रतिषेधचोदनाविषयविषयाणां हिरण्यगर्भमन्वादिमहर्षिभिः स्वकीयासु स्मृतिषु कण्ठतश्चोपलक्षणतो वा निर्व्यग्रमाबद्धतया तत्र तयोः समुद्रयानद्वीपान्तराभिगमनयोराग्रहभरेण प्रत्याख्याततया चान्यथोद्भावनस्य दुरावेशशीलितत्वात्। नहि भरद्वाजस्य भगवतो लोकालोकदरीप्रचेतनमहोद्यतगुणाखण्ड-

लस्याखण्डाम्नायाध्ययनखण्डने के ते परिशिष्यन्तां महर्षयः परिसमापिता खण्डशाखाध्ययना यैरमूः प्रणीताः स्मृतयः कृतवेदार्थसंदृब्धा भवेयुरिति सम्भवति। त्र्यायुषपरिच्छिन्नाध्ययनोद्योगैकसाधनसाधितेप्यनन्तवेदविद्यापरमहिम्नि सावित्राग्निविद्यासाक्षात्कारप्रभवनिरुक्तानन्तवेदार्थसमृद्धपरिज्ञानस्य भरद्वाजसमासादितस्य निराबाधत्वेन स्मृतिकारमहर्षीणां विशिष्टविज्ञानसंपत्सम्पत्तेर्य्यथोक्तसावित्राग्निविद्यापुरोगमसाधनसाध्यायाः सम्प्रतिपन्नत्वेन तत्प्रणेतृकस्मृतिविषयकल्पनानाम्प्रकम्पनीयत्वात् । नहि स्मृतिकृतामात्मीयमालम्ब्याभिनिवेशमणीयान्वा स्मृतौ स्वकीयायामर्थो निरूपितो निरूपयितव्यो वा तथाविधायां स्मृतौ स्मृतित्वस्यैवासङ्गत्याऽनुपादेयत्वलक्षणाक्षेपकलापस्य तत्कालमुपक्रम्याभियुक्तैः प्रवर्त्तयितव्यत्वेऽद्यावधि तत्सातत्यानुभूत्यापत्तेः । न तत्त्ववोप्यालक्ष्यते यमेतमेवम्प्रतिपद्येमहि । तथा च सर्वमुक्तमनवद्यं वेदितव्यम् । यदि चात्थ सावद्यं तदा त्वदीययैव व्यवस्थाव्यक्त्या त्वदीयाया व्यवस्थाया वैतण्डिकीर्युक्तीरवतार्य्य खण्डनीयत्वात् । वादकथामालम्ब्य चेदात्थ तर्हि "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहोवाद" इति सेवस्व पारमर्षं सूत्रमवयवशः सेवस्व च "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमपेक्षता । आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतर" इति मनोर्वचनामृतञ्च धयस्व सोल्लासम् । यदि पुनः प्रमाणप्रच्छन्नसौत्रान्तिकीभूय चेदात्थ तदापि तत्प्रक्रियामेवावतार्य्य प्रक्रियायास्तस्याः प्रत्याख्यानयोग्यत्वादिति स्वभावसुन्दरीभिः प्रशस्तिभिराकलनीयस्तत्वार्थ इति दिक् ।

नन्वनुष्ठितसमुद्रविहारद्वीपान्तरपर्य्यटनानां ब्राह्मणादीनां यादृच्छिकवैहारिकक्रियासामान्यसाम्यमभिसन्धाय वाणीपरीभावप-

रामर्शनिष्पादनस्यैव यथोपपन्नशासनसमाचारसंस्थानतया तावतैवानुग्राह्यता । ननूत्कटांहस्समाच्छन्नमानवानुग्रहसन्निहितप्रतीकारलक्षणाभिः प्रायश्चित्तप्रक्रियाभिः कदाचिद्वेति चेन्नैवम् । यत्प्रयुक्तप्रायश्चित्तप्रक्रियासमाहरणं मनुष्याणां न तेषां द्वीपान्तरमितानामपात्रीकरणमलिनीकरणानुपातकप्रक्रियाप्रयुक्तप्रायश्चित्तयोग्यताकेभ्योऽतिरेकिताया अन्याय्यत्वात् । यादृच्छिकवैहारिकप्रक्रिया अप्युक्तापात्रीकरणादिसमाविष्टचेष्टाकास्तदा कोऽनु तासां तेभ्य उपादीयमानभेदप्रत्ययः समुचितासमुचितक्रियान्वययोग्यत्वेनैव कल्मषाकल्मषित्वानुगतव्यवहारस्य प्रमीयमानतया तदादिदोषविशेषणमुद्रया यादृच्छिकवैहारिकप्रकरणयोर्न्न स्वरूपसत्ता काचित्सम्पत्स्यते । न वा नविरोत्स्यते निरुक्तपातकसम्पर्करहिताभिर्नरशार्दूलव्यक्तिभिः अपितूभयातिरेकभावाभावस्याप्रसिद्धतया तद्दूषणैरेव साक्षात्सम्भंत्स्यते । नहि वाचां तिरस्क्रियाभिः केवलाभिर्दुरितनिर्म्मार्जनमण्वपि वा संभवत्संमीयते प्रमाणकोटिकाभिर्वाग्भिः । तावतैव चेत्परिमार्जनमिष्येत किल्बिषाणां तर्हि प्रतिव्यक्तिपातकानां सन्नियताभ्युपायवैविध्यप्रतिपादनपरं शास्त्रमुन्मथ्येत तदाद्याकस्मिकोत्प्रेक्षागोचरमेव द्योतंद्योतं प्रसज्येत प्रत्यर्थम् इत्थञ्चानिष्टमेवेत्यास्तांतावदसम्भाव्यसम्भावना ।

एवं तर्हि समुद्रयानद्वीपान्तरपर्य्यटनजन्मा का नु तेषां दोषापत्तिः केन वाऽभ्युपायातिशयेन तद्विधूननमिति । अत्राभिधीयते । यद्यप्यपात्रीकरणमलिनीकरणानुपातकसमष्टिर्व्यष्टिर्वा निरुक्तवाक्यशतेन श्रुतिस्मृतीतिहासपुराणमहाधाम्ना समुद्रमहाविमानयायिनां द्वीपान्तरस्वर्गेञ्च सेवितवतां प्रसज्येत्र वेति मीमांसन्ते व्यवहारब्रह्मवादिनः तथापि दूषणमदूषणमभिदधच्छास्त्रमपाक्षिकमाश्वस्य यथायोगं मीमांसित्वा च वर्चांसि तज्जातीयदोषवर्त्तां किल तन्निष्ठामनुमोदयद्भिरेव भवितव्यं तैर्वादिभिः । इत्थञ्च प्रत्यस्तमि-

तपात्रीकरणप्रक्रियालक्षीभूतविलक्षणोत्पादनाविशेषोऽपात्रीकरणम् प्रत्यस्तमितनैर्म्मल्यप्रक्रियालक्षीभूतविलक्षणोत्पादनाविशेषो मलिनीकरणम् महापातकाद्यष्टदोषभिन्नत्वे सति परिगणितपापान्यतमत्वमनुपातकत्वमिति ।

विहितक्रियाविशिष्टपदार्थवत्क्रियात्वं प्रायश्चित्तत्वम् पदार्थे क्रियावैशिष्ट्यञ्च स्वाननुष्ठानजन्यत्वस्वभिन्नक्रियाप्रयुक्तत्वस्वकालीनेन्द्रियार्थप्रसक्तिप्रयोज्यत्वैतत्त्रितयसम्बन्धेन। क्रियायां पदार्थवत्ता च स्वध्वंसजनकतावच्छेदकधर्मवत्त्वस्वध्वंसातिरिक्ताजनकत्वोभयसम्बन्धेन। प्रकृते तु विवक्षितदोषाणामपेक्षया लिलक्षयिषितानि भवन्तीमानि। नच परिगणितपापकनवकस्य प्रत्येकं पर्य्याप्तान्यतमवर्गीणेषूद्दिष्टेषु रूढाहि प्रकीर्णक १ जातिभ्रंशकर २ सङ्करीकरणा ३ पात्रीकरण ४ मलिनीकरणो ५ पपातक ६ महापातका ७ नुपातका ८ तिपातकशब्दाः कथमन्यथयितुम्भवेयुर्योग्या इति वाच्यम् । पद्मादिशब्दवदमीषां रूढत्वानुपपत्तेः। अपितु पुण्डरीकं सिताम्भोजमित्यादावम्भोजपदस्य योगरूढत्वेन पद्मरूपद्रव्यवाचकत्वस्यापि व्यवस्थानवत्प्रकृतेऽपि योगरूढतैव तेषामवसीयते अवयवार्थप्रत्यासत्त्यैवाभिप्रेतार्थप्रत्यायनस्य विवक्षितत्वादिति तत्त्वम् । "अकुर्वन्विहितं कर्म्म निन्दितञ्च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति" याज्ञवल्क्यस्मृतिस्त्रिविधानिष्टचेष्टापरिप्राप्तौ निरूपितापात्रीकरणमलिनीकरणोपपातकलक्षणपातित्यमहापत्तिरुग्रतरा जञ्जन्यते। तद्विधूननञ्च प्रायश्चित्तचण्डमारुतचञ्चत्प्रयोगनिबन्धनमाद्रीयते । प्रायश्चित्तं च। विहितप्रतिषिद्धेन्द्रियारमणकर्म्मणामसमाचारसमाचारसमासक्तिसमापन्नपाप्मातिशयनिर्म्मोचनैकलक्षणः कर्म्मविशेषः ।

पात्रीकरणविशिष्टक्रियावद्विलक्षणक्रियात्वमपात्रीकरणत्वम् । वैशिष्ट्यञ्च स्वप्रयोजकत्वस्वसामानाधिकरण्योभयसम्बन्धेन।क्रिया-

वत्त्वञ्च स्वप्रतिबन्धकत्वस्वसामानाधिकरण्योभयसम्बधेन । नित्य-क्रियाविशिष्टविलक्षणक्रियात्वं मलिनीकरणत्वम् । नित्यक्रियावैशिष्ट्यञ्च स्वप्रतिबन्धकत्वस्वसमानाधिकरणमालिन्यप्रयोजकत्वोभय-सम्बन्धेन । तथाच "अकुर्वन् विहितं कर्म्म निन्दितञ्च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नर" इति स्मर्य्यते मनुना । यथोक्तमङ्गिरसा "प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् यथाहुः । प्रायः पापं विजानीयात् चित्तं तस्य विशोधन"मिति च । नरग्रहण-मिह प्रतिलोमजातानामपि प्रायश्चित्ताधिकारपरिप्राप्तये तेषामपि शौचाहिंसादि सामान्यधर्म्मव्यतिक्रमसम्भवात् किमुतानुलोमजातानां त्रैकालिकसदर्थप्रतिष्ठानयोग्यताकानां प्राग्भवीय-निषिद्धाचरणाक्षिप्तविहितानुष्ठानविरोधिप्रमादालस्यादिनिमित्त-विशेषेण परिणतदुरितात्मनि प्रत्यवाये । न चोक्तयानाभि-गमनयोः प्रायश्चित्तनिमित्तदोषच्छायानुकीर्त्तनमेव केवलं नत्वैका-न्तयथोपपादितत्रिविधप्रकरणान्तःपातित्वमिति मन्तव्यम् । वि-मृश्यमाणयोस्तयोस्ततोऽप्यधिकतरदोषतायाः संयोजयितुमिष्ट-त्वात् । यत्तु यथोक्तनवविधदोषपरिगणनं तदेतत्स्वानुलोमवि-लोमप्रजासांसर्गिकक्रियासम्पातायातम् । तेतु द्वे । स्ववर्णाश्रमा-चारदेशानामशेषाणां मतिपूर्वोत्सर्जनमनुकूलीकृत्य प्रवृत्तप्राये सती नूनमद्य भूयो दूषणबीजभूते साक्षादेवावर्णाश्रमदेशवासविषयी-भूते दोषाकरे एवालक्ष्येते यतो मनुवाक्यमप्रत्यूहमन्वीयेत यथोदा-हृतम् । एवञ्चोदीरितव्यापारद्वयवतामभक्ष्यभक्षणापेयपानादिप्रवृ-त्तिराङ्गलद्वीपादि यथोपपन्नसलिलानिलशैत्यादिदुरपह्नवार्थस्व-रूपपर्य्यालोचनया निरपवादतरैवापद्यमाना कथमकल्मषाश्लिष्टा-प्रत्यवायातिरेकविमोका कल्पान्तेऽपि सम्भवेत् अपि त्वनुवर्तमाना सती स्वजन्यदुरितविशेषविधूननाय प्रायश्चित्तायावकल्पत इति

स्थितम् । एतदेवाभिप्रेत्य "नान्यस्मिन्लोके प्रत्यापत्तिर्विद्यते कल्मषन्तु निर्हण्यत" इत्यापस्तम्बः पठति । याज्ञवल्क्योऽपि "तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये । एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति" अस्यार्थः । यस्मान्नरो निषिद्धाचरणादिना प्रत्यवैति तस्मात्तेन कृतनिषिद्धादिसेवादिना प्रायश्चित्तं कर्त्तव्यमिहामुत्र च विशुद्ध्यर्थम् । कृते किलैवं प्रायश्चित्ते अन्तरात्माऽस्य शुद्धतया प्रसीदति असति विशेषशास्त्रे लोकोऽपि संव्यवहर्तुं प्रसीदति सत्यप्येवं ये खलु नानुतिष्ठन्ति प्रायश्चित्तं दुर्हृदयाः ते तावद्यावज्जीवं विन्दमानास्तिरस्क्रियामन्ते हन्त निरयानेव भजेयुः । यथोक्तं योगीन्द्रेण "प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् १ तामिस्रं लोहशंकुञ्च महानिरयशाल्मलीं । रौरवं कुड्मलम्पूति मृत्तिकं कालसूत्रकम् २ सङ्घातं लोहितोदञ्च सविषं सम्प्रपातनम् । महानरककाकोलं सञ्जीवनमहापथम् ३ अवीचीमन्धतामिस्रं कुम्भीपाकं तथैवच । असिपत्रवनञ्चैव तापनं चैकविंशकम् ४ महापातकजैर्घोरैरुपपातकजैस्तथा । अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ५" पापेषु उच्छास्त्रप्रवृत्तिप्रभवेषु सम्प्रसक्ता मानवा अपश्चात्तापिनो मया दुष्कृतममुकमाचरितमित्येवंविधोद्वेगहीनाः प्रायश्चित्तमकुर्वाणा दुःसहान्नरकानाप्नुवन्ति तामिस्रप्रभृतींस्तापनपर्य्यन्तानेकविंशतिनरकानन्वर्थसंज्ञान् द्योतितावान्तरभेदान् । महापातकोपपातकजनितभयानकदुरितैरन्विता अप्यनाचरितप्रायश्चित्ता नराधमाः प्राप्नुवन्ति तत् उपचितदुरितप्रतिबन्धापनुत्तये प्रायश्चित्तमनुष्ठातव्यमित्युक्तो भवति तदर्थः तदवश्यंभाविता बोधकश्रौतसूत्रमप्याश्वलायनीयमनुग्राहकम्भवति "विध्यपराधे प्रायश्चित्तिरिति" विधिशब्देन विहितमवबोध्यते अपराधोऽन्यथाभावोऽभावोवा तथाच विहितस्याकरणेऽन्यथाकरणे च प्रायश्चित्तिः कर्त्तव्या । निन्दितानिन्द्रियनिग्रह-

योरप्युपलक्षकोऽयं विधिशब्दः प्रायो विनाशः चित्तिः सन्धानम् विनष्टसन्धानम्प्रायश्चित्तिरित्युक्तम्भवत्यनेन । प्रायश्चित्तिशब्दो दुरितविशेषनिर्म्मोचनात्मनि कर्म्मविशेषे नैमित्तिके रूढ इति भूयोभिरुदाहृतार्थनिगमनैरध्यवसीयते । ननु प्रायश्चित्तैराचरितपाप्माऽपयातीति न युक्तम् । कर्म्मणाम्फलोपभोगनाश्यत्वादिति । नैवम् । दुरितोदयस्य शास्त्रैकसमधिगम्यत्वे तदस्तमयं प्रति न प्रमाणान्तरं क्रमत इति स्वारसिकत्वात् । अत एव पूर्वोत्तरकक्षाभङ्ग्या गौतमेनायमर्थो व्यक्ततरं निरूपितस्तथाहि "अथ खल्वयम्पुरुषो येन कर्म्मणा लिप्यतेऽथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रियाप्रतिषिद्धसेवनमिति च तत्र प्रायश्चित्तं कुर्य्यान्न कुर्यादिति मीमांसन्ते न कुर्य्यादित्याहुः । नहि कर्म्म क्षीयत इति कुर्य्यादित्यपरे पुनस्तोमेनेष्ट्वा पुनः सवनमायातीति विज्ञायते व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानन्तरति ब्रह्महत्यां योऽश्वमेधेन यजतेऽग्निष्टुताभिशस्यमानं याजयेदिति च । न चाभिनिष्पन्नस्वरूपं कर्म्म कार्म्मुकनिर्मुक्तो बाणो लक्ष्यवेधे वेद्धुस्तद्व्यापारस्य वा सत्तां यथा न पुनरपेक्षते तथा प्रतियोगिभूतकर्म्मणः प्रायश्चित्तलक्षणस्य तत्सहकारिभूतस्य वा सत्तामुपादातुं न क्षमत इति वाच्यम् । लोकेऽपि कर्म्मणः कर्म्मान्तरेण भञ्जनविधानस्य दृष्टचरत्वात् । सङ्कीर्णकारणावलम्बि कतिपयचिकित्सादिकर्म्मणामनिष्टापादनयोग्यताकत्वेऽप्यसङ्कीर्णकरणग्रामसमवहितानामनागमिकप्रक्रमाभावरहितानान्तेषामिष्टार्थसमर्थनैकयोग्यताया निरूढत्वात् । नच पुनरागमैकगम्येऽर्थे कालान्तरसाक्षात्कारसंक्लृप्ते कोऽसावद्य प्रायश्चित्तकर्म्मप्रभवापूर्वातिशयो निगम्यतां येन तत्कर्म्मणि किल्बिषवन्तो विश्वस्युरासमन्तादिति साम्प्रतम् । अतीन्द्रियार्थव्यवस्थानस्येत्थंभूतनिर्द्धारणा गृह्यमाणत्वेन तत्र त्वरमाणमनःप्रचाराणामकिञ्चित्करत्वात् । नहि काचित्क्रिया निर्वर्त-

नवेलायामेव कस्मैचित्फलायावकल्पते यथाऽभिमतम् अपितु कतिपयकालव्याप्त्यैवेति व्यापकानुभवः परमत्र वैगुण्यसाद्गुण्याभ्यामर्थानर्थसमायोगहेतुभूताभ्यां परिच्छिद्यमाना अशेषा एव क्रिया आस्थीयन्त इति यतितव्यमत्र साद्गुण्यसम्पत्तये निराबाधम् । नहि निर्व्यग्रकारकसम्वलने कार्य्योदयो विलम्बं कथञ्चित् क्षमत इति न किञ्चिदवद्यम् । ननु निर्वर्णितदोषकात्स्न्र्यमग्रजेष्वेव सम्भवन्न बाहुजातोरुजातपादजातानामसङ्गतप्रायमालोक्यते लोकयात्रासमर्थनायत्तजन्मत्वात्तेषां हि केवलमिति । मैवम् । चातुर्वर्ण्यस्य "ब्राह्मणोऽस्य मुखमासी"दिति चैकश्रुत्यान्वितत्वलक्षणसामानाधिकरण्येऽन्योऽन्यसाधारणासाधारणव्यवहारकदम्बस्य च निरूपयितव्यत्वे च निकर्षोत्कर्षभावास्पदीभूतश्रौतस्मार्त्तक्रियाधिकारलक्षणवैलक्षण्यस्यानन्यभावसहकृतस्य समाश्रयणीयत्वात् तन्नियतधर्म्मप्रशस्तिमनुपमृद्यैव जगद्व्यापारनिर्वर्त्तनाधिकृतत्वाच्च बाहुजादीनां । नहि लोकव्यवहृतयो धर्म्मप्रौढप्रागल्भ्यमन्तरा स्वरूपसत्तामाधातुमीशते । नहि भूयस्स्वधिकरणेषु तयोरसाहचर्य्यसम्प्रधारणनिमित्तान्वयव्यतिरेकव्यभिचारा वा चिकीर्ष्येते इति भवति कार्य्यसत्तासमसत्ताकत्वाभावलक्षणवैकल्यादेः कारणनिष्ठस्य कार्य्यनिष्ठस्य च विपर्य्ययेण वा ग्रहणीयत्वात् । वर्णाश्रमिव्यवहारस्य चतुर्वर्गविश्रान्तस्य व्यत्यासमन्तरा व्यत्ययेप्यशीर्णोपायध्रौव्य एवान्यविधविचारणा अर्हत्यवकाशम् नापरथा । तथाच क्षत्रियादीनामपि समुद्रयानद्वीपान्तरगमनाभ्यनुज्ञानं न विषयीकरोति कामपि प्रमाणवाचम् । नहि प्रमाणमृते प्रवृत्तिरर्थवत्यापि साधीयसी नवाऽसम्भिन्नार्थमर्य्यादानतिशायिनीं विना प्रवृत्तिं सम्भवेयुरर्थवन्ति प्रमाणानि । नन्व"जितं जेतुमनुचिन्तयेन्न क्वचिदप्यलम्बुद्धिमादध्यादि"ति सामश्रुती समस्तमहीतलजिगीषाव्यवसितधियमेव बाहुजमनुग्राहयन्त्यौ कथमत्र स्तोकसम्पदा तो-

षातिशयमनुजानीयाताम् विट्शूद्रौ वा कथङ्कारं तयोर्विहितक्रियास्वलंमती आ तन्वातां वदान्यतमे कदाचिद्वा नैष दोषः। विहितराजसूयादिमहोत्साहप्रसक्त्या किल युक्तियुक्तया तदादिनिरतिशयसन्नाहस्य परिकरात्यन्तिकपौष्कल्यसम्मीलितस्य पुरस्तान्निरूपितप्रकारान्यथाऽनुपपत्त्या परमिष्टत्वात्। नहि क्षत्रियविशोर्विजयवाणिज्यक्रिययोरुपचयातिशयं न समीहामहे अपि त्वनार्य्यद्वीपपर्य्यटनादिनिबन्धनार्य्यमर्य्यादापर्य्युदासलक्षणधर्म्मव्यतिक्रममात्यन्तिकोद्वेगनिमित्तभूतमणुतरं वा न सहामहे। न चोभयोः परिपालनपूर्वपर्य्यटनप्रसक्तौ का क्षतिरिति वाच्यम्। एकतरपरिपालनस्यापि तावन्मात्रसमुल्लसितमानसानामप्रत्यक्षंगतत्वस्य भूयोदर्शनानुसंहिततयाऽनुमानप्रयोजकव्याप्तिग्रहौपयिकतर्कस्यैवासिद्धेः। नहि विजयो वाणिज्यं वा तत्तद्गोचराभिः केवलाभिरेव लालसाभिः स्वार्थमर्हति। अपि त्वनेककारकानुष्ठानवीर्य्यवत्तासमन्विताभिः स्थाने यथानीतिरीति च प्रयुज्यमानाभिः क्रियामात्रम्प्रति नियतेषु कारकेषु जगन्नायककरुणाकटाक्षवीक्षणपात्रताप्रतिपत्तिलक्षणनिजधर्म्मानुष्ठानमेव नेदिष्ठमोजिष्ठञ्च। नहि सत्यां तमसत्तायान्तरसत्ता तथेष्यते किमुत सत्तानाम केवला। स्तोकक्रियाम्प्रति सामान्येन कारणभावे निरूपणीये स्वरूपतरयोस्तावन्मात्रनिष्पादनायालम्भावसम्भवेऽपि स्फीतार्थसमुद्धारसमाधानकृते तमसत्त्वैव सातत्येनालमिति समस्तव्यवहारवित्समयातिशयः। यदि तां धर्म्मविषयविषयामेव निह्नुषे कारकान्तरगोचराश्च प्रतिपत्स्यसे कथन्तर्हीप्सिततमां व्यवस्थामुत्तमसत्तया प्रतिपिपित्सेः तमसत्तामुत्तमां मन्यमाना यतमानाश्च तत्कोटिकार्थसार्थेभ्योऽर्थाद्विहन्येरन्। यदि तत्र प्रेक्षावदुपेक्षालक्षणः स्वापराधो विहिताधिकरणः स्यात् तदा वर्धामहे वयं हताः स्थ यूयमिति किमिति वर्णनीया व्याख्यानवैखरी श्लाघनीयप्रज्ञस्य यद्यदृष्टध-

र्म्मसत्तायाः प्रकृष्टकारकतामनभिसंधायेतरेषां दृष्टवस्तूनामेवान्यतमे तद्भावोऽभिसंधास्येत तदा तावतैव गतार्थतामनुचिन्त्या दृष्टाभिमुखीः कल्पनास्तद्वैषम्यनिषण्णा व्यथावा कथमेष प्रतिप्रत्ययमाकलयेदाकलयन्वा उपयन्नपयन्भावो मानवं कमप्यविकृतात्मानं न विद्ध्यादिति विन्देदवसाने व्यावहारिकगर्ववाहोऽपि । सर्वापि व्याकृतस्थितिरव्याकृतपूर्वैव गम्यमाना यथाङ्कुरादिफलपर्य्यन्ता कार्य्यदशा । नर्त्ते काश्चिद्बीजात्मनाऽवस्थानलक्षणां कारणदशां स्वरूपेण कुहस्वित्कदाचित्केनचिद्वाऽनुभूयते । अनुभवपथमारूढा बीजावस्था पूर्वैव सर्वेति प्रत्युत सैषा रूपान्तरमापन्नेति च कार्य्यलिङ्गकानुमानमेव तद्गमकमवगम्यते लोकतः । वेदतस्तु वचः स्वावयवभूत"मसद्वा इदमग्र आसीत् । ततो वै सदजायते"त्येवमादिकमनेकमनुभूयते । इत्थं चाव्याकृतापरपर्य्यायकारणावस्थालक्षणपरब्रह्मप्रतिनिधीयमानतन्निरतिशयविवर्त्तभूतवैदिकधर्म्मस्यानुष्ठानजन्मा परविभूतिरुत्तरोत्तराया अपरस्या लौकिकविभूते राज्यवाणिज्यादिदशाविवर्त्तमानायाः परमास्पदत्वेन तन्निर्भरभरभागिभिरेव लोकलोचनैरपि श्रेयस्कामैर्भवितव्यम् । न च सदसदर्थसमवाप्तिनिमित्तभूतयोः श्रद्धाऽश्रद्धयोः किमिति स्वपरमान्तवासावासविषयिण्यकिञ्चनकल्पनेत्याशङ्कनीयम् । स्वविघटनानुकूलसामग्रीविमोकादृते श्रद्धाया अप्यसिद्धशीलतया देशकालवसतिविहारादीनाम्प्रतिनियतसाधनपटलीसन्निविष्टानां तत्प्रतिष्ठानयोग्यताकत्वात् श्रद्धाविधुराणामेव प्रायशो द्वीपान्तरप्रयाणादिप्रयोगबाहुल्योपलम्भाच्च । तेन हि स्वच्छन्दता तेन नियमातिलङ्घनम् ततश्चात्यन्तिको धर्म्मव्यतिक्रम इति व्यक्ततरो विपरीतपरिणामः । अत एव "शास्त्रातिगः स्मृतो मूर्खो धर्म्मतन्त्रोपरोधना"दिति बौधायनस्मरणमुपपद्यते । "अश्रद्धापरमः पाप्मा श्रद्धा हि परमं तप" इतीदमप्यन्वेत्यत्र विविक्ततया त-

दीयम् । अपिच "अयज्ञेनाविवाहेन वेदस्योत्सादनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च । गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया । कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः । मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि । कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यश" इत्युन्मार्गगामिनाममार्गगामिनाञ्चोदाहृतस्वरूपाणां स्वरसवाहिविपर्य्ययव्यवहारधारामुपलक्षयन्ति विशिष्टस्मरणानि महर्षेरवबोद्धव्यानि । नच मन्वत्रिविष्णुहारीतेत्यादिस्मरणात्परिगणितस्मर्तॄणामन्यतमवत्ता न गम्यते बौधायनस्येति भ्रमितव्यम् । भगवतस्तस्य कल्पसूत्रकृतो वेदार्थरहस्यपारावारपारदृश्वनः स्मृतिकारेभ्योऽन्यूनसत्ताकत्वात् । तन्निरूपितार्थप्रामाण्यप्रत्यासत्त्या च तद्गोचराप्रामाण्यशङ्काकलङ्कानवकाशात् । अथैवं यथोपपादितविषयावल्याः पर्य्यालोचनया सागरयानद्वीपान्तराभिगमनलक्षणविलक्षणक्रियाव्यासङ्गवतामापाततो दूषणप्रसञ्जनभाषायाः सोपपत्तिकत्वेऽपि तदंशे परिनिष्ठितप्रमाणवाणीमाकाङ्क्षामहे यया वयं व्यपेतसन्देहाः प्रायश्चित्तश्चरेमहि । अत्राचक्ष्महे । यद्यप्यमुष्मिन्नर्थे स्मृतीनाममुदाहृतानाङ्कण्टाघोषस्तथापि सद्यः संधानाय पुनः प्रत्याययिष्यामः स्मृतिरश्मिविभेदम् । तथाहि "पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः १ यानि दक्षिणतस्तानि व्याख्यास्यामः २ यथैतदनुपेतेन सहभोजनं स्त्रिया सह भोजनं पर्य्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ३ अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकम् समुद्रसंयानमिति" ४ "अथ पतनीयानि १ समुद्रसंयानम् २ ब्रह्मस्वन्यासापहरणम् ३ भूम्यनृतम् ४ सर्वपण्यैर्व्यवहरणम् ५ शूद्रसेवनम् ६ शूद्राऽभिजननम् ७ तदपत्यत्वञ्च ८ एषामन्यतमं ९ कृत्वा चतुर्थकालामितभोजिनः स्युरपोऽभ्युपेयुः १० सवनानुकल्पम् स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपघ्न-

न्ति पापमिति। यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः। ११ चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापमिति" इति हस्माह भगवान्बौधायनः। सुरापानं सीधुपानम् उभयतोदन्तास्तुरङ्गमाः तैर्व्यवहारः जीविकार्थमश्वादीनां क्रयविक्रयलक्षणव्यापारपरिग्रहः "पद्दन्नोमास् हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु" इति पाणिनिसूत्रेण पादादीनां पदादय आदेशाः स्युः शसादौ वा इत्यर्थकेन ददादेशे सति उभयतोदद्भिरिति भिसि रूपमभिजायते। आयुधेन जीवतीत्यायुधीयः "आयुधाच्छ च चाठन्" इति सूत्रेण छप्रत्ययः तस्य ईयादेशे आयुधीय इत्यस्मात्स्वार्थे के आयुधीयकमिति निष्पद्यते शस्त्रोपजीवित्वमिति तदर्थः "या प्रापण"इत्यस्मात्सम्पूर्वात् यात्यनेनेत्यस्मिन्नर्थे "करणाधिकरणयोश्चे"ति ल्युटा संयानमिति रूपमभिजायते समुद्रस्य संयानं समुद्रसंयानम् समुद्रविहारप्रयोजकनौकागमनपर्य्यन्तोऽजहत्स्वार्थलक्षणयार्थोऽवगम्यते। ननूर्णाविक्रयोभयतोदव्यवहारायुधीयकैः सार्कं साहचर्य्यमहिम्ना समुद्रसंयानशब्दस्य वृत्त्यर्थं समुद्रे समुपात्तनौकाव्यवहारपरत्वे सत्येव व्यवहारस्य हि तस्य दोषात्मकतया तद्वति ब्राह्मणे पातित्यसम्भवेऽप्यन्यादृशसमीहावतां हेलया तद्गमने कोन्वत्र दोषित्वावगम इति मैवम् समुद्रसंयानस्य केवलस्यैवात्रावगमात्। नहि वृत्त्यर्थमन्यार्थं वा तद्यानं विशेषतो नियम्यते नियामकविशेषाप्रत्ययात्। नचोर्णाविक्रयोभयतोदव्यवहारायुधीयकसहपाठात्समुद्रसंयानशब्दस्यापि गमनस्य जीविकानिबन्धनस्यैव गमकत्वमवकल्पत इति भ्रमितव्यम्। एवन्तर्हि सीधुपानशब्दस्यापि पानस्य वृत्त्येकनिबन्धनस्य वाचकतापत्तेर्दुष्परिहरत्वात् तस्याऽपि तैरेव सहपाठात्। न चेष्टापत्तिरिति सन्तोष्टव्यम्। पानस्य परिनिष्पन्नस्वरूपत्वेन वृत्त्यर्थत्वाभावात् असमशीलदोषाणामपि दोषविशेषप्रत्यासत्त्या

सह पाठसम्भवेऽपि स्वरूपप्रत्यासत्त्या तु पार्थक्यस्यैवोपगमाच्च।

ननु पुनः प्रागुपन्यस्तायाः "समुद्रयायी कृतहा रथ्यासमयभेदकः। द्विजस्याब्धौ तु नौयातु"रित्याद्यौशनसादिस्मृतेर्घटकीभूत-"समुद्रयायि"पदोपपन्नस्य "सुप्यजातौ णिनिस्ताच्छील्य" इति पाणिनिस्मरणात्ताच्छील्यनिबन्धनणिनिप्रत्ययस्य प्रतिपत्तौ तस्य हि ताच्छील्यस्य साक्षात्क्रियासमभिहारात्मकत्वे च सातत्येन जीविकार्थमभ्यात्तसमुद्रसंयानानां किल कैवर्त्तकादीनामेवाभिधाता न तु नो विनोदाय सकृद्द्वित्रिवारं वा द्वीपान्तरमाजुषतां ब्राह्मणादीनां सशब्द इति। मैवम् "करणे यज" इत्यापवादकाधिकारादानन्तरात्तदन्तर्वर्त्तियजधातोरुपादानस्य धात्वन्तरोपलक्षकत्वे तत एव प्रकृते णिनिप्रत्ययविधाने सति सूत्रस्यास्याताच्छील्यार्थतया तद्गोचरप्रत्यवस्थानभेदस्याग्रहणार्हत्वात्। नचोपलक्षणविधया विचारप्रवतार्य्य तत्त्वविनिर्णिनयिषा प्रमाणपथमारोहन्ती समुदाचरेदित्याशङ्कनीयम् तस्या अपि प्रमाणपटलीसमन्तर्हृदयतया समानयोगक्षेमत्वात् नह्यत एव "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा"दित्यस्यामृचि शीर्षाक्षपादशब्दास्त्रयः समष्ट्या व्यष्ट्या वाऽकण्ठोक्तश्रोत्रघ्राणादीन्द्रियाण्युपलक्षयन्तो न तेषामापरोक्ष्येणाभिलापकानाम्पदानां समभिव्याहारमपेक्षन्ते कया चिद्व्यपेक्षया। न वा व्युत्पित्सुजना लघुं परिहायाध्वानमतिवेलकाललाभेऽप्यनुपदव्युत्पादननिरता ह्यापद्यन्ते पाणिन्यादयो महर्षयः। यथाह वार्तिककारः "रक्षोहागमलघ्वसन्देहाः प्रयोजन"मिति। विवृतं चैतत्पतञ्जलिना "लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनावश्यं शब्दा ज्ञेया इति न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुमिति" तदिदं कण्ठत उपलक्षणतो वेति व्यक्तीभवत्येव यथायोगम्। अतो "लघ्वर्थं हि संज्ञाकरण"मित्यप्युपपद्यते वचस्तदीयम्। "ऋषयोपि पदार्थानां नान्तं यान्ति पृथक् ततः। लक्षणे न तु

सिद्धानामन्तं यान्ति पृथक् त्वश"इति च स्मर्य्यतेऽतितराम् । नच तावता प्रकृतमसम्बद्धमिति वाच्यम् । तदादि दृढप्रतिपत्तय एव तत्प्रवृत्त्युपपत्तेस्तदिदमाकलनीयं प्रकृतमेवेति । नन्वस्तु तावदौपलक्षण्यमन्यत्र किमिह तावता समुद्रयायिपदे ताच्छील्यार्थप्रसक्तिसामञ्जस्यमिति । अत्राचक्ष्यते "सुप्यजातौ णिनिस्ताच्छील्य"इत्यधिकारान्तराद्यद्यपि जातिपदभिन्नपद एव गम्यमानणिनिप्रत्ययस्य ताच्छील्यार्थता निरूढा तथा सत्यपि क्षीरादिभेदभिन्नव्यक्तिवाचिनः समुद्रशब्दस्य जातिशब्दत्वे तदभिन्नोपपदसमभिव्याहृतपदप्रकृतिभूत"या" धातूत्तर"णिनि"प्रत्ययाप्राप्तौ ताच्छील्यासम्भवात् । एतदेवाभिप्रेत्य "साधुकारिण्युपसङ्ख्यानं ब्रह्मणि वदः अताच्छील्यार्थे वार्तिकद्वयं साधुकारो ब्रह्मवादी"त्यताच्छील्यार्थपर्य्यवसायि वार्त्तिकोन्नीतोदाहरणद्वयमुदित"यायि" पदस्वरूपोद्घलकमुपपन्नं भवति तदेतच्च यथोक्तदिशा ह्युपलक्षणमर्य्यादां नातिशेते "राजा सर्वस्येष्टे ब्राह्मण्यवर्ज्जं साधुकारी स्यात्साधुवादी त्रय्यामान्वीक्षिक्यां चाभिविनीत"इति गौतमस्मृतिघटकसाधुकारिसाधुवादिपदे तथाविधे वेदितव्ये । एवमेवाताच्छील्यार्थपर्य्यवसायिन आत्मघात्यग्निष्टोमयाजी सोमयाजी पितृव्यघाती ब्रह्मघातीत्येवमादिकाः शब्दा उदाहार्य्याः । एवञ्च सकृदसकृद्वेत्यादिविकल्पास्पदीभूतशङ्काऽनवकाशे वृत्त्यर्थेमन्यार्थे वा गमनं केन तुभ्यमभ्यधायि । तथाच तदेतदप्रामाणिकमनर्थफलकञ्चेत्यवधारितमवधारयिष्यते च । इत्थञ्चानन्यनिष्ठसंयानसामान्यस्य निर्वृत्तस्वरूपस्य पातित्यापादकत्वस्य दुराधर्षणीयत्वे वृत्त्यर्थमभिप्रसञ्जितस्य तस्य परपातित्यप्रसञ्जकतायां पाटवातिशयसमायोगः कैमुतिकन्यायायत्तश्च निराबाधोऽवधार्य्यते । तदिदमुक्तं भवति हेलया तद्गमनप्रसक्तावपि तन्निमित्तपातित्यावलेपनमनपह्नवार्हमिति । न चोर्णाविक्रयपुरोगमानां

सदा सर्वत्र प्रचारचराणाम्पातित्यप्रयुक्तनिष्कृतिसमाचारानुभूत्यभावे किमिति तत्समुदायैकतमसमुद्रसंयानस्यैव प्रायश्चित्तार्हतोपपद्यत इति शक्यन्नियोक्तुम् । व्यापारेषूर्णाविक्रयादिषु स्वस्वसन्नियतदूषणाधानसमर्थनस्य समुचितत्त्वेऽपि समुद्रसंयाने नूनमेभ्यो निग्रहार्हभूयो दूषणगोचरतापरञ्जञ्जन्यते । जोहोर्ति च तदास्पदीभूतविक्रियावैजात्यम् । मोमोर्ति च निर्मृष्टाशेषस्वस्त्ययनप्रत्यनीकभूतप्रयोगराजिः । दोधूयन्ते च ध्वजान्ताः सद्ध्वविजयस्तम्भमौलीनाममन्दमिति परिष्करोतु मतिमत्तामुदासीनोऽपि । ऊर्णादिव्यवहारकोटिनिविष्टत्वेऽपि सीधुपानसमुद्रसंयानयोरन्यादृशस्वरूपमवसेयम् । तत्रापि तारतम्यविचारणायामुभयोः समसत्ताकत्वमेव फलतः सम्प्रधार्य्यते । न चोर्णादिवत्तन्निरूपितवैलक्षण्यमाञ्जस्येनैव समुद्रसंयानेऽपि किन्न स्यादिति वाच्यम् तद्याने प्रवृत्तम्प्रति सीधुपानकर्म्मणोऽत्यासन्नाभ्यवहारक्रियासमस्वभावत्वात् । नहि तत्र प्रवृत्ताः सीधुपानान्निवृत्ता उपलभ्यन्ते यत्नेनान्विच्छद्भिर्वा कुहस्वित् प्रत्युत तदादि प्रणिहितात्मान एवानवरतमेवंविधा आधीयन्ते । नहि तदाद्युदासीना यदा कदापि याने प्रवृत्तिं प्रामाणिकीं विजानीयुः । नह्यन्याय्यतयाऽनिष्टनिदानतया चावसितां तां कटाक्षेणापि वीक्षते कदाचिद्वा । नहि विषं विशेषेणात्मघातुकमाजानन्नशनायाया उपशमाय तत्र प्रवर्त्तयेत्प्रवर्त्तमानस्तदेतदापीय पिपासां वोपशमयेत् ।

ननु "ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धगस्तेन नास्तिकनिन्दितकर्म्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्निति" गौतमस्मरणान्महापातकेष्वेतेषु समुद्रसंयानस्यापाठेऽकस्मान्मसीसम्पातायातः समुद्रसंयानशब्दः कथम्महापातककोटिकतया स्वार्थमभिदध्यात् । नैष दोषः ब्रह्महननसुरापानादीनाम्प्रत्येकम्महापातकतया निर्ज्ञातानां

द्वित्राणां काममत्र समष्टेः समुद्रसंयानकर्म्मण्याप्तोतत्वे फलतः समुद्रसंयानकर्म्मणो महापातकतरताऽभ्युपगमे प्रत्यवायाभावात् । ईदृङ्निरूढदोषास्पदतयैव समुद्रसंयानपदस्य सीधुपानसहपठनस्य समुचिततरत्वान्न सर्वज्ञकल्पानाम्परमर्षीणां रचनाविशेषकर्म्मणि मसीसम्पातायातगोचरकल्पना हि निजार्भकपयःपानवेलासमुन्नीतनिमीलितनेत्रस्याखुभुजो जगन्मात्रनिमीलनावस्था प्रतिभासवृत्तान्तमनुहरति । न ह्याजानसिद्धानां प्राग्भवीयवेदार्थानुष्ठानलब्धजन्मनिर्भ्रान्तप्रज्ञानां सामर्थ्यमस्मदीयेन प्रमादभूयिष्ठेन सामर्थ्येनोपमातुं शक्यते यतो न मसीसम्पातादिवितर्कविशेषः क्षणमप्यवतिष्ठेत । नहि समुद्रसंयानशब्दो मुख्यया किल वृत्त्या मृदुतरार्थविशेषमेवाभिदधन्नोपसर्जनप्रत्यासत्त्या वा यथोक्तदोषाधिक्यव्यासङ्गवाहो नाभिप्रेयते विरूपविधानाय कथञ्चित् तत्पदार्थप्रथमोपस्थितेरनन्यशेषत्वप्रतिपत्तियोग्यताकत्वेऽपि समनन्तरोपस्थितिगोचरप्रत्ययबाहुल्यमहिम्ना यथोपपादितदोषाणां शेषभावमापन्नानां शेषित्वेनोक्तापत्तेरनवकाशात् । नच सह पठितयोर्ब्रह्मस्वन्यासापहरणभूम्यनृतयोस्तत्प्रभवयोश्च पाप्मनोः प्रसक्तमानुषाणां दोषित्वेन सुव्यक्तमनुभूयमानानां प्रायशोऽकृतप्रायश्चित्तत्वेऽसंव्यवहार्य्यत्वाभाववत्त्वे च समुद्रसंयानप्रसक्तानामेव किमिति निगृह्य प्रायश्चित्तार्हताऽसंव्यवहार्य्यतयोरादरातिशय इति वाच्यम् । ब्रह्मस्वन्यासापहरणभूम्यनृतयोरविप्रतिपन्नदोषभावत्वे तत्प्रसक्तलोकानां सम्प्रतिपन्नदोषवत्त्वे च तन्निर्म्मोचनोपायानुष्ठानप्रयत्नाभावस्यात्यन्तिकनास्तिक्यनिबन्धनत्वेन सकलसन्मार्गबहिर्विषयविषयत्वेन च दण्डार्हत्वात् । सर्वपण्यव्यवहरणशूद्रसेवनयोरारूढपामर्य्यकार्पण्यकार्य्यभूतयोः शूद्राऽभिजननतदपत्यभावयोश्चानवच्छिन्नमहामोहमूलीभूतयोः परपातित्यनिमित्तयोरपि संसर्गिवर्गीणपरिषदुपेक्षालक्षणपरापराधप्रयुक्तब्राह्मण्यमहाहानिरा-

नुभविकी तेषां वा यथायोगं व्यवहारपदत्वे पक्षप्रतिपक्षाभ्यां विमृश्य राजशासनभागितया तस्यापि शासनस्य "दण्डवत्प्रायश्चित्तानि भवन्ती"ति नियमात्प्रायश्चित्तप्रतिनिधितया च फलतः समतावगमात् । असंव्यवहार्य्यताप्रतीतिरपि दोषगौरवनिबन्धनाऽसति सतामनुमोदने कथमन्यथयितुं प्रभवेयुरन्यादृशाः ।

तथाविधानामेव भूयस्त्वेन नो निर्बन्ध इत्याद्याः कल्पनाः पुरस्तान्निरस्ता एवेति तदेतन्न प्रसर्त्तव्यं मनागपि । तथा च बौधायनस्मरणमयूखमालानामप्रत्यवायतमस्तोमापहर्त्री निरातङ्कैकक्र्य्याधिकरणा ज्ञातव्या । इत्थञ्च समुद्रसंयानादि जन्मनः पातित्यलक्षणबन्धनाद्ब्राह्मणादेर्मुमोचयिषया प्रवृत्तां मातापितृशतेभ्योऽपि वत्सलतरां भगवतीं श्रुतिश्चतुर्थकालेत्याद्यामुदाजहार परमकारुणिको मुनिग्रामणीः । पतनीयानाममीषां समुद्रसंयानोपक्रमतदपत्यपर्य्यन्तानां सप्तानामितरेतरस्वरूपवैधर्म्म्यसौक्ष्म्यातिशयसम्भवेऽपि पतनीयताप्रयोजकधर्म्मविशेषस्य सप्तस्वनुगततया तत्पुरस्कारेणैकमुख्यमेव प्रायश्चित्तस्य प्रख्याप्यते सूक्ष्मेक्षिकयैतया ऋचा । अत्र शूद्रशब्दो न केवलं चतुर्थवर्णत्वावच्छिन्नस्य वाची अपितु निगमागममर्य्यादासामान्यानधिकृतस्य मानवमात्रस्य लक्षयिता तुरीयवर्णवर्गीणास्तूच्यंते केवलं न तु लक्ष्यन्ते । लक्ष्यन्ते हि तज्जातीयेभ्यो भिन्नाजघन्यतराचारशीलाः क्षोणीतलमात्रमीयमाना निरवशेषा एव मानुषाः "पद्भ्यां शूद्रोऽजायते"ति श्रुतिस्तुरीयजातीयमेवापरोक्षमुद्रयाऽभिधत्ते । "असतो वा एष सम्भूतो यच्छूद्र"इति तु श्रुतिर्य्यथोदीरितलक्ष्यार्थप्रधानाऽवधार्य्यत इति तयोर्विवेकः तथा चोभयविधशूद्रसेवनादेर्दीर्घकालनैरन्तर्य्यसम्पादितस्यैव त्र्यब्दप्रायश्चित्तार्हता न त्वल्पैरहोभिराचरितस्य एवञ्चैककोटिनिविष्टतया समुद्रसंयानप्रभवपातकापहारं प्रत्यप्यसत्यदीर्घकालिकसमाचारे त्र्यब्दप्रायश्चित्तपरिसमाप्तिर-

परिहार्य्या । समुद्रसंयानोपलक्षितद्वीपान्तरप्रयाणजन्मानं प्रति पातित्यापादकदोषविशेषमेतदेव हि प्रायश्चित्तमर्थसिद्धम् । न चैनदार्थमेव प्रायश्चित्तं ते तावतेति मन्तव्यम् स्मरणे सत्यमुषिन्नत्यासन्ने तदसम्भवात् । न च पुन"रापत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽऽसमाप्तेर्ब्राह्मणो गुरुर्य्याजनाध्यापनप्रतिग्रहाः सर्वेषां पूर्वः पूर्वो गुरुस्तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिस्तस्या पण्यं गन्धरसकृतान्नतिलशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी क्षीरञ्च सविकारं मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि पशवश्च हिंसासंयोगे पुरुषवशा कुमारीहेतवश्च नित्यं भूमिव्रीहियवा याव्यश्च ऋषभधेन्वनुडुहश्चैके । विनिमयस्तु रसानां रसैः पशूनाञ्च न लवणाकृतान्नयोस्तिलानाञ्च समेनासमेन तु पक्वस्य सम्प्रत्यर्थे सर्वधातुवृत्तिरशक्तावशूद्रेण तदप्येके प्राणसंशये तद्वर्णसङ्करोऽभक्ष्यनियमस्तु प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत राजन्यो वैश्यकर्म्मवैश्यकर्म्मे"ति गौतमस्मृतिसमुच्चय आपदि सत्यां ब्राह्मणादेरुत्तरोत्तरवर्णजीविकापरिग्रहमनुग्राहयन्नापत्तरप्रसक्तौ तु शूद्रातिशूद्रसेवनादिप्रत्याख्यानगोचरोत्प्रेक्षाविशेषाणामनभिप्रेतप्रायतयाऽऽपत्तरविशेषसमुपस्थाने समुद्रसंयानद्वीपान्तरप्रयाणयोरपि तत्तुल्यप्रत्यासत्त्याऽनुज्ञानयोग्यताकतया विहितार्थसमोऽयमर्थो नोपन्यस्तप्रायश्चित्तप्रक्रियाऽऽधायक इति विवदितव्यम् । प्रत्यवस्थानानां खलु केवलनामकार्य्यक्षमत्वात् । नह्यापदि निरूपितोऽर्थो विक्रमप्रक्रियामाधातुमीष्टे "यावद्वचनं हि वाचनिकमि"ति न्यायात् । यद्यापत्तरमुद्दिश्येयत्ता चेदतिलङ्घेत । ततस्ततोऽप्यापत्तरमापत्तरञ्चेत्यापदामानन्त्यादनवस्थापातेऽनियमपर्य्यवसानमेव फलतः प्रतीयादिति नियमकारिशास्त्रमप्रयोजकमनवस्थितचरञ्च प्रसज्येत । आपत्कल्पोऽपि बुद्धिपौरुषहीनानेवालन्तोषयितुं न तु विपर्य्ययान् ।

नह्याक्रन्दननिमित्ते पर्य्युपस्थित आक्रन्दनक्रियागोचर उपदेशो महिमानमर्हत्युपदेष्टुः उपदेष्टा वा नहि तादृग्भिरुपदेशैरात्मानमाकलयते कुक्षिम्भरिं कृतमतिः । आपत्कल्पोऽप्याप्तोपदेशो धर्म्माव्यतिक्रमायैवावकल्पते न तु व्यतिक्रमार्थम् । नानर्थे उपदेशः क्वचिदपि श्लाघापदम् । अश्रद्धात्मनः प्रतिभत्युत ततो मर्कटस्य मदिरापानमिति न्यायोऽनुगम्यते । नहि साधनवैकल्यप्रयुक्ताऽऽपत्तिः स्वव्याख्या स्वानुकूलोपपत्तिभ्यामर्थवत्तामापद्यते । किन्तु स्वापहारकसामग्रीसङ्घटनाऽनुकूलपौरुषातिशयप्रयोगादेव स्वयञ्चोपदेश्य उभावप्यश्नुवीयातां कृतकृत्यताम् । धीरास्तु सम्पत्समयविवक्षया विपत्समय एव धर्म्माचरणबद्धदीक्षालोकतः शास्त्रतश्चानुभूयन्ते यद्बलादेव ते पुनः पूर्वतरां सम्पदमापेदिरे । यथाच पाण्डवादयो महाभागा अन्येऽप्यसङ्ख्याका एवार्त्तवर्गीया ह्यद्यावधि । एतेनापत्कालीनधर्म्माचरणसङ्कोचगोचरप्रवादा अधार्म्मिकप्रवृत्तिपरिसङ्ख्यानयोगयोग्या इत्युक्तं भवति । तथाच सागरसंयानद्वीपान्तरपर्य्यटनयोर्म्मधुमांसाशनादि प्रवृत्त्यन्यावृत्तयोस्त्र्यब्दप्रायश्चित्तविधानमत्यादरगोचरमुन्नीयते । तदेतत्पुनःसंस्कारसहकृतमेवा"रट्टान् कारस्करान् पुण्ड्रान् शाकान् प्रानूनानिति च गत्वा पुनःसंस्कारमर्हति पुनस्तोमेन यजेत पुनः सर्वपृष्ठया वा" इति बौधायनस्मरणेनाधिगम्यते । पुनरुपनयनं पुनःसंस्कारः परमत्र"वपनं मेखला दण्डो भैक्ष्यचर्य्या व्रतानि च । निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणीति वसिष्ठस्मरणादेतावान्वै भेदोऽधिगम्यते । नहि पुनःसंस्कारादृते त्र्यब्दप्रायश्चित्तप्रक्रिया"पापापनुत्तये यथावत् क्षमते । यतः प्रायश्चित्तं प्रयुञ्जानैर्वैगुण्याप्रसक्तये साद्गुण्यसम्पत्तये च पुनःसंस्कारसमुच्चिचीषावद्भिस्तत्सिद्धिसंवलितैश्च भवितव्यम् । यथाह तु"यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुराम्पुनः । पुनः संस्कारकरणाच्छु-

द्धयेदाह पराशरः १ अज्ञानात्तु सुराम्पीत्वा रेतो विण्मूत्रमेव वा । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः । चान्द्रायणञ्चरेत्सर्वानवकृष्टान्निहत्य तु । शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध्यती"ति याज्ञवल्क्यपराशरौ । न च रेतःपुरोगमादीनां निदानमिदमप्रयोजकं प्रकृत इति मन्तव्यम् प्रथमोद्दिष्टमद्यपाने निर्व्यग्रमभिप्रेतत्वादितरेष्वपि वाचिकविधया निगम्यमानत्वाच्च । असत्यवश्यम्भाविकार्य्योपरोधे सति च कायिकसामर्थ्ये चतुर्थकालेत्यादिश्रुत्युन्नीतसाधनानुष्ठानमेव श्रेयः साधनायालं नान्यथा । प्रमादालस्यादिकृता यथोक्तानुष्ठानोपरतिरन्याय्येति न तद्वतां चेतःप्रसादाय प्रकारान्तरानुसरणं प्रामाणिकम् । उक्तानुपपत्तियाथात्म्ये त्रिभिर्वर्षैस्तदपघ्नन्ति पापमिति श्रुतिघटकपदेभ्यः त्रिसांवत्सरिकप्रायश्चित्तानुष्ठानप्रतिनिधितया कृच्छ्रचान्द्रायणाद्यनुगृहीतं भवति । स्मर्य्यते च "पद्मोदुम्बरबिल्वैश्च कुशाश्वत्थपलाशयोः । एतेषामुदकम्पीत्वा पर्णकृच्छ्रं तदुच्यते १ पञ्चगव्यञ्च गोक्षीरदधिमूत्रशकृद्धृतम् । जग्ध्वा परेऽह्न्युपवसेदेष सान्तपनो विधिः २ पृथक् सांतपनैर्द्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं स्मृतम् ३ त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुंक्ते त्वयाचितम् । त्र्यहं परञ्च नाश्नीयात्प्राजापत्यो विधिः स्मृतः । सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः । अयाचिते चतुर्विंशः परेऽह्न्यनशनं स्मृतम् । कुक्कुटाण्डप्रमाणं स्याद्यावद्यस्य मुखं विशेत् । एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ४ त्र्यहमुष्णम्पिबेदापस्त्र्यहमुष्णं पिबेत्पयः । त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् । षट्पलानि पिबेदापस्त्रिपलन्तु पयः पिबेत् । पलमेकन्तु वै सर्पिस्तप्तकृच्छ्रं विधीयते ५ दध्ना च त्रिदिनं भुङ्क्ते त्र्यहं भुङ्क्ते च सर्पिषा । क्षीरेण त्रिदिनं भुङ्क्ते वायुभक्षो दिनत्रयम् त्रिपलं दधिक्षीरेण पलमेकन्तु सर्पिषा । एतदेव व्रतम्पुण्यं वैदिकं

कृच्छ्रमुच्यते ६ एकभुक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ७ कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् । द्वादशाहोपवासेन पराकः परिकीर्त्तितः ८ पिण्याकदधिसक्तूनां ग्रासश्च प्रतिवासरम् । एकैकमुपवासः स्यात्सौम्यकृच्छ्रः प्रकीर्त्तितः ९ एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् । तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः १० कपिलागोस्तु दुग्धाया धारोष्णं यत्पयः पिबेत् । एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत्११"दित्यत्र भगवताऽत्रिणा । प्रयोगपुरःसरं पुनर्भगवता गौतमेन स्मर्य्यते । तथाहि "अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरम् । त्र्यहं नक्तम्भुञ्जीत अथापरं त्र्यहं न कञ्चन याचेदथापरम् । त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्य्यैर्न सम्भाषेत रौरवं यौधाजने नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्रवतीभिर्वा यजेत हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिः । अथोदकतर्पणम् ॐनमो हमाय मोहमाय संहमाय धुन्वते तापसाय पुनर्वसवे नमो नमो मौञ्ज्यायोर्म्म्यार्य वसुविन्दाय सर्वविन्दाय नमो नमः । पाराय सुपाराय महापाराय पारयिष्णवे नमो नमो रुद्राय पशुपतये महते देवाय त्र्यंबकायैकचराधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमोनमः सूर्य्यायादित्याय नमोनमो नीलग्रीवाय शितिकण्ठाय नमोनमः । कृष्णाय पिङ्गलाय नमोनमो ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्ध्वरेतसे नमोनमः । सत्याय पावकाय पावकवर्णाय कामाय कामरूपिणे नमोनमो दीप्ताय दीप्तरूपिणे नमोनमस्तीक्ष्णरूपिणे नमोनमः सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमोनमश्चन्द्रललाटाय कृत्तिवाससे पिनाकहस्ताय नमोनमः इति । एतदेवादित्योपस्थान-

मेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाऽग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्योदेवेभ्यो ब्रह्मणे प्रजापतये अग्नये स्विष्टकृत इति । ततो ब्राह्मणतर्पणम् । एतेनैवातिकृच्छ्रो व्याख्यातो यावत्सकृदाददीत तावदश्नीयादब्भक्षस्तृतीयः सकृच्छ्रातिकृच्छ्रः प्रथमञ्चरित्वा शुचिः पूतः कर्म्मण्यो भवति । द्वितीयञ्चरित्वा यत्किञ्चिदन्यन्महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते । तृतीयञ्चरित्वा सर्वस्मादेनसो मुच्यते अथैतांस्त्रीन् कृच्छ्रांश्चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवति यश्चैवं वेदे"ति । चान्द्रायणश्च "एकैकं वर्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत् । अमायाञ्च न भुञ्जीत एष चान्द्रायणो विधि"रिति । तदिदं सप्रयोगं महर्षिणा बौधायनेन स्मर्य्यते । तथाहि "अथातश्चान्द्रायणस्य कल्पं व्याख्यास्यामः । शुक्लचतुर्दशीमुपवसेत् केशश्मश्रुलोमनखानि वापयित्वाऽपि वा श्मश्रूण्येवाहतं वाससो वसानः सत्यं ब्रूयान्नावसथमभ्युपेयात् तस्मिन्नस्य सकृत्प्रणीतोऽग्निररण्यो निर्म्मन्थो वा ब्रह्मचारी सुहृत्प्रैषायोपकल्पी स्यात् हविष्यञ्च व्रतोपायनीयं अग्निमुपसमाधाय सम्परिस्तीर्य्याग्निमुखात्कृत्वा पक्वान् जुहोति अग्नये या तिथिः स्यान्नक्षत्राय सदैवताय । अत्राह गोरमन्वतेति । चान्द्रमसीं पञ्चमीं द्यावापृथिवीभ्यां षष्ठीमहोरात्राभ्यां सप्तमीं रौद्रीमष्टमीं सौरीं नवमीं वारुणीं दशमीमैन्द्रीमेकादशीं वैश्वदेवीं द्वादशीमिति । अथापराः समामनन्ति दिग्भ्यश्च सदैवताभ्य उरोरन्तरिक्षाय सदैवताय । नवोनवो भवति जायमान इति सौविष्टकृतिं हुत्वाऽथैतद्धविरुच्छिष्टं कंसे वा चमसे वा व्युद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्य पञ्चदश पिण्डान् प्रकृतिस्थान् प्राश्नाति प्राणायत्वेति प्रथमम् अपानायत्वेति द्वितीयम् व्यानायत्वेति तृतीयम् उदानायत्वेति चतुर्थम् समानायत्वेति पञ्चमम् । यद्वा

चत्वारो द्वाभ्यां पूर्वं यदा त्रयो द्वाभ्यां द्वाभ्यां पूर्वौ यदा द्वौ द्वाभ्यां पूर्वं त्रिभिरुत्तरमेकं सर्वैः निग्राभ्यास्थेति अपः पीत्वा खाद्यस्य जुहोति प्राणापानवाङ्मनःशिरःपाणित्वक्चर्म्मशब्दः पृथिवी । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहेति सप्तभिरनुवाकैः जयप्रभृतिसिद्धमाधेनुवरप्रदानात् सौरीभिरादित्यमुपतिष्ठते चान्द्रमसीभिश्चन्द्रमसम् अग्ने त्वं सुजाग्रहीति संविशन् जपति त्वमग्ने व्रतपा असीति प्रबुद्धः स्त्रीशूद्रैर्नाभिभाषेत मूत्रपुरीषे नावेक्षेत अमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रञ्चक्षुः सूर्य्यो ज्योतिषां श्रेष्ठोदीक्षे मामाहासीरिति प्रथमायामपरपक्षस्य चतुर्दश ग्रासान् एवमेकापचयेनामावास्यायां ग्रासो न विद्यते प्रथमायां पूर्वपक्षस्यैको द्वौ द्वितीयस्यां एवमेकापचयेनापौर्णमास्याः पौर्णमास्यां स्थालीपाकस्य जुहोत्यग्नये या तिथिः स्यान्नक्षत्रेभ्यश्च सदैवतेभ्यः पुरस्ताच्छ्रोणाया अभिजितः सदैव तस्य हुत्वा गां ब्राह्मणेभ्यो दद्यात् तदेतच्चांद्रायणं पिपीलिकामध्यं विपरीतं यवमध्यं अतोऽन्यतरं चरित्वा सर्वेभ्यः पातकेभ्यः पापकृच्छुद्धो भवति कामायकामायैतदाहार्य्यमित्याचक्षते यं कामं कामयते तमेतेन प्राप्नोति एतेन वा ऋषय आत्मानं शोधयित्वा पुराकर्म्माण्यसाधयंस्तदेतद्धन्यं पुण्यं पुत्र्यं पौत्र्यं पशव्यमायुष्यं स्वर्ग्यं यशस्यं सार्वकामिकं नक्षत्राणां सूर्य्याचन्द्रमसोरेव सायुज्यं सलोकतामाप्नोति य उ चैनदधीते य उ चैनदधीत” इति एतेषामेकादशधा परिगणितानां कृच्छ्राणामधुनातनमानववपुःपाटवादिपर्य्यालोचनया एकस्याप्यव्यग्रमनुष्ठानं प्रभवेदर्थयितुं न वेति संदिहानाः प्रत्यब्दं त्रिंशत्प्राजापत्यानि चान्द्रायणानि च त्रीणि सन्ति त्रिभिर्वर्षैः सङ्कलनया नवतिः प्राजापत्यानां नवकं चान्द्रायणानां संख्यामत्यासन्नामप्युपशमय्य तेषामप्यनुकल्पानेव साभिप्रायाननुजानी-

महे । तथाहि "प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् । धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः । धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्तिते" ति स्मर्य्यते । एतदुक्तं भवति । चतुर्थकालेत्यादिश्रुत्युक्तत्रैवार्षिकव्रतम् यद्वा नवतिः प्राजापत्यानि तदनुष्ठानाशक्तौ नवतिदोग्ध्रिधेनुदानं तत्राप्यशक्तौ तन्मूल्यभूतसार्धद्वादशोत्तरशतरौप्यमुद्रादानमिति त्रयः पक्षाः समुदिता भवन्ति । यद्यप्येतदर्थे यथोपन्यस्तप्राजापत्यानामेव प्रायश्चित्तश्रुत्यर्थस्वारस्यमहिम्नाऽवश्यानुष्ठेयता तावदविप्रतिपन्नप्रमाणभावमर्हति तथापि सुरापानमांसाशनादीनां महापातकानामेतत्प्रायश्चित्तीयमानवयोग्यतापर्य्यालोचनया प्रसक्तिमभिसन्धाय "मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च । कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा । पवित्राणि जपेत्पिण्डान् गायत्र्या चाभिमन्त्रयेत् । धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् । कृच्छ्रकृद्धर्म्मकामस्तु महतीं श्रियमाप्नुयात् । अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु" इत्यादि याज्ञवल्क्याद्यनुशासनविशेषेभ्यश्चान्द्रायणादेरपि प्राप्तिः प्रामाणिकी पुण्यातिशयनिष्पादिनी च सम्पद्यते । नहि प्रमाणप्रतीतोऽर्थो मनागप्युपेक्षामर्हति कर्म्मणि वैगुण्यापत्तेर्दुरुद्धरत्वात् । तथाच प्राजापत्यवत्त्रिस्त्रिभिः समाभिः नवकं चान्द्रायणानामुद्गृहीतम्भवति । तत्राप्यनुष्ठानाशक्तौ तत्प्रत्याम्नायभूतगोदानानि प्रतिचान्द्रायणं हि सार्धसप्त ७॥= संख्याकान्यवक्लृप्तानि सन्ति । सङ्कलनया नवसंख्याकानाञ्च तेषां सार्धसप्तषष्टि ६७॥ संख्यान्यभिजायन्ते गोदानानि । तत्रापि पुनरसामर्थ्ये तन्मूल्यभूतषडाणकोत्तरचतुरशीति ८४।= रौप्यमुद्रिकाप्रदानं विधीयते प्रकृतप्रायश्चित्तपरिशिष्टनिष्क्रयणानां विचारणया "प्राणायामैः पवित्रैश्च दानैर्होमैर्जपैस्तथा । शुद्धिकामाः प्रमुच्यन्ते पातकेभ्यो

न संशयः। प्राणायामान् पवित्रांश्च व्याहृतीः प्रणवं तथा। पवित्रपाणिरासीनोऽध्यभ्यस्य ब्रह्म नैतिकम्। आवर्त्तयेत्सदा युक्तः प्राणायामान् पुनःपुनः। आकेशाग्रादानखान्तात्तपस्तप्यत उत्तमम्। निरोधाज्जायते वायुर्वायोरग्निर्हि जायते। तापेनापो हि जायंते ततोऽन्तः शुध्यते त्रिभिः। तथा चर्म्म तथानङ्गा दोषा अभ्यर्तिधर्म्मतः। तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात्। प्राणायामैर्देहेद्दोषान् धारणाभिश्च किल्बिषम्। प्रत्याहारेण विषयान् ध्यानेनानैश्वरान् गुणान्। नच तीव्रेण तपसा न स्वाध्यायैर्न्न चेच्छया। गतिं गन्तुं सुराः शक्ता योगात्संप्राप्नुवन्ति याम्। योगात्सम्प्राप्यते ज्ञानं योगो धर्म्मस्य लक्षणम्। योगः परन्तपो नित्यं तस्माद्युक्तः सदा भवेत्। एकाक्षरम्परं ब्रह्म प्राणायामः परन्तपः। ब्रह्माणी चैव गायत्री पावनं परमं स्मृतम्। सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यत" इत्याद्याभिः स्मृतिभिर्दोषारण्यप्रदाहाय प्राणायामतनूनपात् प्रभुर्भवति। एवञ्च सहस्रं प्राणायामाः कर्त्तव्यतया विधीयन्ते "प्राणायामसहस्रं हि पातकानां विशोधक" मिति योगियाज्ञवल्क्यस्मरणात्। नच "प्राणायामशतं कार्य्यं सर्वपापापनुत्तये। उपपातकजातानामनादिष्टस्य चैव ही"ति याज्ञवल्क्यस्मृतिः शतमेव प्राणायामान् बोधयन्ती बाध्येतेति वदितव्यम्। उपपातकजातनिर्हरणपरतया तन्निष्ठार्थवत्तायाः कण्ठोक्तत्वेऽपि प्रकृतप्रायश्चित्तीयजनाचरितसीधुपानादिमहापातकापनुत्तये सहस्रस्य समाश्रयणीयत्वात् लक्षगायत्रीजपो विधीयते। यथोक्तं मनुना "लक्षं जप्ता तु सा देवी महापातकनाशिनी" ति। नच "सर्वेषामेव पापानां सङ्करे समुपस्थिते। दशसाहस्रमभ्यस्ता गायत्री शोधनी परे" त्यत्रिस्मरणमेवंसति बाध्येतेत्याशङ्कनीयम्। तस्य ह्यनुपातकसार्थनिर्ह-

रणपरतयाऽर्थवत्त्वात्। तद्दशांश १०००० गायत्र्या साज्ययवतिलहोमः तद्दशांश १००० भूतया तया तर्पणम् तद्दशांश १०० भूतया तया मार्जनम् तद्दशांशब्राम्हणसन्तर्पणम् परमेतद्यथाविभवमूहनीयमिति दिक्। यथोक्तम् "जपस्य तु दशांशेन होमं कुर्य्याद्यथाविधि। होमार्थन्तद्द्विगुणं जपेन्मंत्रं समाहितः। होमस्य तु दशांशेन तर्पणं समुपाचरेत्। तर्पणस्य दशांशेन मार्जनं समुदाहृतम्। मार्जनस्य दशांशेन ब्राह्मणान् भोजयेत्तत" इति स्मृतिकारैः सीधुपानादिप्रसक्तौ तु ध्रुवायाममीषां "सुरापः स्वर्णहारी तु रुद्रजापी जले स्थितः। सहस्रशीर्षाजापी च मुच्यते सर्वकिल्बिषैः। शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः। सर्वपापहरा ह्येते रुद्रैकादशनी तथा। यत्र-यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः। तत्रतत्र तिलैर्होमो गायत्र्या वाऽर्चनन्तथे" ति स्मृतिभ्यो योगीश्वरस्य शतरुद्रीयपारायणं तदेकादशन्योरनुष्ठानमभ्युक्तं भवति "स्तेयं कृत्वा गुरुदारांश्च गत्वा मद्यं पीत्वा ब्रह्महत्याञ्च कृत्वा। भस्माच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः। भस्मदिग्धशरीरस्तु भस्मशायी जितेन्द्रियः। सततं रुद्रजाप्योऽसौ परां सिद्धिमवाप्स्यति। रोगवान् पापवाँश्चैव रुद्रं जप्त्वा जितेन्द्रियः। रोगात्पापाद्विनिर्मुक्तो ह्यतुलं सुखमश्नुत" इत्याह स्म शातातपः "रहसि कृतानां महापातकानामपि शतरुद्रीयं प्रायश्चित्त" मिति शंखः "यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स्वर्णस्तेयात्पूतो भवति सुरापानात्पूतो भवति ब्रह्महत्यात्पूतो भवति कृत्याकृत्यात्पूतो भवतीति" "एकादशगुणान्वापि रुद्रानावर्त्य शुद्ध्यति। महापातकोपपातकेभ्यो मलिनीकरणेभ्यो मुच्यत" इत्यत्रिः। वेदपारायणं च विशिष्यैकं विधीयते। यथोक्तमत्रिणा "यथा महाह्रदे लोष्टं क्षिप्रं सर्वं विनश्यति। एवमात्मकृतं पापं त्रयी दहति देहिन" इति। बौधायनोऽप्याहस्म। तथाहि ऋतञ्च सत्यञ्चेत्येतदघमर्षणं

त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। आयं गौः पृश्निरक्रमी-दित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। द्रुपदादिवेन्मुमुचान इत्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते। हंसः शुचिषदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते अपि वा व्याहृतीर्व्यस्ताः समस्ताश्चेति त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यत" इति। नन्वमीषामभ्युपायानां जागरणे कथङ्कारं दुराचारेभ्योऽव्यावृत्ता भवेयुः किल्बिषिगणा इति-चेन्नैवम्। तत्त्वस्यान्यथैवावगमयितव्यत्वात्। नहि गोपनसामग्रीसमवधानमपराधपौनःपुन्ये निमित्तमपि तु स्वनिष्ठवीर्य्यातिशयवशात्परिरक्षणक्षममेव दोषवताम्। नहि सन्निधानसामर्थ्याच्चेष्टयमानानां प्राणिनां स्वयं साक्षाच्चेष्टयिता विवस्वान् यथा महीरुहशाखाश्चालयति स्वयं नभस्वान् तथाच न पावनहेतूनास्थाय पापप्रसक्तैर्भवितव्यम्। यथाच स्मर्य्यते "न वेदबलमाश्रित्य पापकर्म्मरतिर्भवेत्। अज्ञानाच्च प्रमादाच्च दह्यते कर्म्म नेतर" दित्यत्रिणा भगवता। नन्वभ्युपायभूतयथोदाहृतावयवे प्रत्येकस्मिन् पार्थक्येनैव पाप्मापनोदनप्रभुताऽवगम्यमाना कथम्बहुतरोपायसमुच्चिचीषा प्रामाणिकी निगम्यतामिति मैवम् निरूपितोपायसमष्ट्यनुष्ठानावच्छेदेनैव पाप्मापनोदनप्रक्रियाया निराबाधायाः परिष्क्रियाविशेषविषयत्वात्। नहि तीव्रतरबुभुक्षाव्यथमानमानसानां प्ररोचनातिशयसमृद्धये प्रचुरतराः कल्प्यमानभक्ष्यभोज्यलेह्यचोष्यपोष्यादयोऽप्रस्तुततयाऽप्रयोजकतया वोत्प्रेक्ष्यन्ते द्विष्यन्ते वा प्रेक्षावद्भिः कथञ्चित्। अपित्वाप्यायपारम्परीप्रसिद्धये सन्नियतमर्य्यादाप्रतिपत्तये च तोष्टूयमानाः प्रमीयन्ते। तदेतन्न दोषायेति कृतमत्र दुर्हृदयमनीषिकया। एवञ्चोदितानुष्ठाने स्फीतमाहात्म्यसमास्कन्दिते तदिदं निगदव्याख्याताभ्यां ब्राह्मणकल्पसूत्राभ्यां व्याख्यातमेवेतीह विस्तरभयादुपरम्यते। दिव्य-

तीर्थपरिसेवनमप्यनुष्ठेयतया विहितं भवति । तदिदमुपनिबद्धश्रुतिघटकाभ्यां "स्थानासनाभ्यां विहरन्त" इतिपदाभ्यामालक्ष्यते प्रमाणान्तरैरवधार्य्यते च तदल्पं दीर्घं वेति यथायोगं प्रयोक्तव्यं प्रयोक्तृभिः । न च ते पदे स्थानासनसामान्यसञ्चरणमेव बोधयतो नतु तीर्थादिविशिष्टविषयमिति साम्प्रतम् । तयोरपि शुद्धिहेतुत्वन्यतमतयोपात्तत्वेन तावन्मात्रोपादानेऽतिशयासम्भवादतिप्रसक्तेर्दुष्परिहरत्वाच्च । इत्थञ्च समुद्रसंयानद्वीपान्तरप्रवासवतां ब्राह्मणानां यथावत्कॢप्तत्रैवार्षिकप्रायश्चित्तमुपदिष्टं भवति । दीर्घकालिकतदनुष्ठानाशक्तौ यथोपन्यस्तप्राजापत्यचान्द्रायणप्राणायामगायत्रीजपशतरुद्रीयावर्त्तनवेदपारायणदिव्यतीर्थविहरणान्यनुकल्पभूतान्यभ्यनुज्ञातानि भवन्ति । क्षत्रियविशोरेतत् त्रिपादद्विपादाभ्यां मितं हि प्रायश्चित्तमनुक्रमेणादिष्टं भवति । शूद्रस्य तु जपहोमादावधिकाराभावः । यथोक्तमङ्गिरसा "तस्माच्छूद्रं समासाद्य सदा धर्म्मपथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् । शूद्रः कालेन शुध्येत गोब्राह्मणहिते रतः । दानैर्वाप्युपवासैर्वा द्विजशुश्रूषया तथे"ति । पराशरेणापि "शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति । ब्राह्मणांस्तु नमस्कृत्य पञ्चगव्येन शुध्यति । अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं हि तत् । सर्वधर्ममवाप्नोति द्विजैः संवर्द्धिताशिषा । दुर्बलेऽनुग्रहः कार्य्यस्तथा वै बालवृद्धयोः । अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः । स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रहं ये वै तत्पापं तेषु गच्छति । शरीरस्यात्यये प्राप्ते वदन्ति नियमं तु ये । महत्कार्योपरोधेन न स्वस्थस्य कदाचन । स्वस्थस्य मूढाः कुर्वन्ति नियमन्तु वदन्ति ये । ते तस्य विघ्नकर्त्तारः पतन्ति नरकेऽशुचा" विति स्मर्य्यते । यत्तु "कृच्छ्राण्येतानि

कार्य्याणि सदा वर्णत्रयेण तु। कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयत" इति स्मरणं तदेतत्काम्यकृच्छ्रविषयम्। यत्तु "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति। नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात्प्रतिषेधन" मिति स्मर्य्यते मनुना। तदिदं त्रैवर्णिकाधिकारिकादनीयानदनीयप्रकरणविशेषवशाल्लशुनपलाण्ड्वादिभक्षणे नास्ति पातकम्। विहितपाणिग्रहातिरिक्तसंस्कारश्च नार्हत्येव शूद्रः नास्योपवासादावधिकारो नित्यः नापि तदकरणात्प्रत्यवैति तत एवास्य नास्ति धर्म्मात्प्रतिषेधनं करणेऽभ्युदयोऽस्त्येवेति विवृतं मेधातिथिना। तथाच यथोदाहृतवाक्यार्थसमन्वयपर्य्यालोचनया पादमात्रप्रायश्चित्ताधिकारयोग्यताकत्वं शूद्रस्य गम्यते प्रामाणिकम्। स्मर्य्यते च "विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यत" इति विष्णुना भगवता एवं चातुर्वर्णिकानामुपपन्ने प्रायश्चित्ते तद्भूमिकापि दिङ्मात्रेण प्रदर्श्यते। तथाहि मासस्वशेषेषु च सितासितपक्षयोरविशेषेण तदारम्भोपपत्तिः। तत्र चाष्टमीचतुर्द्दश्योस्तिथ्योर्वासरयोश्च मन्दभौमयोरनारम्भ इत्येतावान् विशेषः। तीर्थक्षेत्रादौ तन्निर्वर्त्तनं वीर्य्यवत्तरम्। विप्रकृष्टतमे तस्मिन् गोष्ठं वा तत्कर्म्मयोग्यताकमनुगृह्यते गुरोः सन्निधानेऽपि तद्योगो योग्यो भवति। स्मर्य्यते च "नाष्टम्यां न चतुर्द्दश्यां प्रायश्चित्तपरीक्षणम्। शनिमङ्गलयोश्चापि न कर्तव्यं कदाचन। अनुपोष्य च रात्रिश्च तीर्थान्यनभिगम्य च। अदत्वा काञ्चनं गाश्च दरिद्रो नाम जायते "यत्र क्वचन नर्म्मदातीरे यमुनातीरे गंगायां विशेषतः कुशावर्त्ते बिल्वके नीलपर्वते कनखले भृगुतुङ्गे केदारे महालये फल्गुतीर्थे महागंगायां त्रिहलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः गंगाद्वारे प्रयागे च गंगासागरसङ्गमे सततं नैमिषारण्ये वाराणस्यां विशेषतः अगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योति-

षायाश्च सङ्गमे श्रीपर्वते कालोदके उत्तरमानसे सप्तार्षे विष्णुपदे स्वर्गमार्गपदे गोदावर्य्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायां इरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे एवमादिष्वथाऽन्येषु तीर्थेषु सरिद्वरासु सर्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु पर्वतेषु निकुञ्जेषु वनेषूपवनेषु गोष्ठेषु मनोज्ञेषु च "यत्करोति गयाक्षेत्रे प्रभासे पुष्करेऽपि च। प्रयागे नैमिषारण्ये सर्वमानन्त्यमुच्यते १ गंगायमुनयोस्तीरे तीर्थे वाऽमरकण्टके। नर्म्मदायां गयातीरे सर्वमानन्त्यमुच्यते २ वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये। सप्तारण्येऽसिरूपे च यत्तदक्षय्यमुच्यते ३ गुरुः परतरं तीर्थमतस्तीर्थे न विद्यत" इति यथाक्रमं संवर्त्तविष्णुगौतमशङ्खैः पूर्वस्मिन्नहनि वपनं विधायाज्यं पयो वा प्राश्य संक्लृप्तकालसंख्योल्लेखपूर्वकं हि सङ्कल्पो विधातव्यः। तथाच श्रूयते। केशश्मश्रुवपते नखानि निकृन्तते दतो धावत इति सूत्र्यते च केशश्मश्रूणि वापयेयुः नखानि च मृदादिभिर्यथाश्रुतं स्नायात्। भगवन्तमनुस्मरेत्। नातिरिक्ता वाचो वदेयुः न शूद्रेण सम्भाषेरन्। न स्त्रीभिः सह संवसेयुः न दन्तान्दर्शयेरन् सन्धिवेलयोर्वाचं यच्छेयुरित्येवमादि तदेतन्नियमानुपालनपुरःसरं परेद्युः पुनररुणोदये स्नात्वा यथावदीश्वरमनुस्मरन् पूर्वाभिमुख उत्तराभिमुखो वा भूत्वा कुशानास्तीर्य्य तदुपरि प्रायश्चित्तद्रव्याणि संस्थाप्य दर्भपवित्रपाणिराचान्तः प्राणानायम्य देशकालौ सङ्कीर्त्य ममामुकगोत्रोद्भवस्यामुकशर्म्मणो वर्म्मणो गुप्तस्य दासस्य वा ब्रह्मक्षत्रत्वादिमहापतननिमित्तभूतसमुद्रसंयानद्वीपान्तरप्रवसनाद्युपचितोपपातकमहापातकापात्रीकरणमलिनीकरणादिदुरितक्षयार्थं ब्राह्म्यादियोग्यताधिकारसिध्यर्थञ्च त्रैवार्षिकाव्रतानुकल्पभूतप्रायश्चित्ताख्यं कर्म्म करिष्य इति सङ्कल्प्य यथोपन्यस्तविधिना प्राजापत्यचान्द्रायणगायत्रीजपप्राणायामरुद्रीयावर्त्तनादिब्राह्मणसन्तर्पणपर्य्यन्तङ्कर्म्म यथाऽधिकारं

निर्वर्त्य स्वस्त्ययनं वाचयित्वा शिष्टैरनुज्ञातः स्वयम्भुञ्जीत निजनिकेतनं यात्वा यथाविभवं सविनयं सप्रार्थनश्च ज्ञातीयाँश्च भोजयेत् नातः परं प्रसज्येरन् यथोदीरितप्रत्यवायजनिकासु क्रियासु अन्यथा कुञ्जरशौचप्रक्रियेव कृतानुग्रहविग्रहाणामप्युपहासपात्रताऽऽपत्तिरपरिहार्य्यप्राया अत एव “कृते पापे यस्य पुंसः पश्चात्तापोऽनुजायते। प्रायश्चित्तं तु तस्यैव कर्त्तव्यं नेतरस्य तु। जातानुतापस्य भवेत्प्रायश्चित्तं यथोदितम् । नानुतापस्य पुंसस्तु प्रायश्चित्तं न विद्यते। नाश्वमेधफलेनापि नानुतापे विशुध्यते। तस्माज्जातानुतापस्य प्रायश्चित्तं विशुद्धय” इति स्मर्य्यते हि हारीतेन। यद्यपि सद्योजातानुतापतया विग्रहादिनिर्ज्ञातविशेषहेतुभ्यः प्रत्याधीयन्ते प्रायश्चित्तीयजनाः केचन तथापि तदवस्थातः पर्य्यायेण व्यावर्त्तमानाश्चोत्तमसाहसिकसंघान्तःपतिततया निग्रहैकयोग्यताकाः पर्य्यवस्येरन्नित्यानुकूल्यमाद्रियन्तां मतिमद्भिर्यतः संव्यवहार्य्यतायामविप्रतिपन्नविचारणावन्तो भवेयुर्बान्धवादयः। ननु यथोक्तप्रायश्चित्तैर्य्यथोदितदुरितेभ्यःसंशुद्धिर्जायतां नाम परमेभिः सार्द्धं “श्रोत्रिया यत्र नाश्नन्ति न देवास्तत्र भुञ्जते। श्रोत्रियेभ्यः परं नास्ति दैवतं तारणं महदि”ति गौतमस्मृतेराचाराच्चाचरितप्रायश्चित्तैरप्यभ्यवहारादिव्यवहारमकुर्वाणैः श्रौत्रियैः क्रियमाणायामुपेक्षायामसंव्यवहार्य्यतैवार्थिकी सती किन्नः श्रेयः प्रायश्चित्तप्रयासवतामिति बाढम् तथापि युष्माकमुत्तरकालीनक्रियानैर्म्मल्यमनुसंधास्यमानास्तद्गोचरनिरपवादप्रत्यये सजग्ध्यादिभिरनुगृह्णीयुरेवदयालुतया श्रोत्रिया अपि पर्य्यायेण दयनीयान् वै युष्मान्। नहि पङ्क्तिपावनाः पङ्क्तिदूषकप्रतीतिमत्तामापन्नैः सहसासहभोजनादिव्यापारानविगीतान्मन्येरन् विगीताविगीतवस्तुनोरितरेतरप्रत्यनीकभावस्य साहजिकत्वात्। न प्रायश्चित्तीयजनविशेषविषयासंव्यवहार्य्यतानिबन्धनाग्रहातिशयः श्रोत्रियाणामतो न भवत्येव दोषाधायकः।

वस्तुतस्तु सुवृत्तदुर्वृत्तभेदभिन्ना अपि स्वीयताऽतिरेकवर्जिततया परपरम्पराकमानवसमवायघटकताऽनाश्रयतया चोद्वृत्तवर्त्तना अप्यवलंबितनिजांशाभिमानैरपरामृष्टशैषिकक्रियावैधर्म्यहेतुवादैरभिप्रवृत्तदाक्षिण्यवीचीपरम्पराकैरवधारितशास्त्रार्थप्रचयसाभिप्रायाभिनिवेशवद्भिश्चानुग्राह्या एव यया कयाचिद्विधयाऽऽचार्य्यैर्ज्ञातीयैः कौटुम्बिकैः कदाचित् उच्छास्त्रप्रवृत्तिश्च कामतोऽकामतो वाऽऽलक्ष्यते । नच प्रवृत्तिसामान्यस्य "यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्म्मणा करोती"ति श्रुत्या व्यापकान्तःकरणप्रचारपूर्वकत्वमवक्लृप्तं सत्कथमकामतः क्रियालेशो वा नैरात्म्यापत्तिलक्षणः सम्पद्यतामिति साम्प्रतम् तथाविधानुभूतिभेदस्य सार्वजनीनत्वात् । नचा "न्यत्र मना नाद्राक्षमन्यत्रमना नाश्रौष" मित्येवमादिकया श्रुत्या मूलीभूतमनोनिवेशनमृते कतिपयकालावयवव्यापिनि दर्शनश्रवणात्मन्यपि वा कर्म्मण्यप्रवृत्ते निरवच्छिन्नकालावयवव्यक्तिभिः सम्पादनीये नानाविन्यासचातुरीसमास्कन्दितेऽर्थातिशये कथमबुद्धिपूर्विकाकृतिरुपजायतामिति शक्यमाक्षेप्तुम् विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणलक्षणनिर्णयसंस्पर्शमन्तरायादृच्छिकक्रियाभिमुखप्रवृत्तिविशेषस्यैव तत्रतत्र तदातदा प्रसक्तिविषयीभूतस्याबुद्धिपूर्व्वकक्रियाविशेषव्यपदेशभागभागित्वात् यद्येवं नाभविष्यत्तर्हि "प्रमादो मानुषो भाव" इति कृष्णद्वैपायनस्मरणानुग्राहक "सत्यान्न प्रमदितव्यम् धर्म्मान्न प्रमदितव्यम् कुशलान्न प्रमदितव्यम् भूत्यै न प्रमदितव्यम् देवपितृकार्य्याभ्यां न प्रमदितव्यमित्येवं जातीयकानामनितिकर्त्तव्यताऽभिमुखप्रवृत्तिविमुखीकरणपराणां श्रुतीनां प्रवृत्तिर्न्निरात्मकमेवोद्देश्यमवाकल्पयिष्यत् नचैवं सम्भवति प्रमादाद्यनुवादिन्याः श्रुतेर्भगवत्या निरपवादनिरूपणाधीनयोग्यताकत्वात् तदिदमुक्तमबुद्धिपूर्विकैवैच्छिकी प्रवृत्तिरिति एतदेवाभिप्रेत्य "अकामतः कृते पापे प्रायश्चित्तं विदु-

बुधाः। कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनादि"त्यभ्यधायि सर्वज्ञसङ्काशेन मनुना। नन्वेवंविधयोपपत्त्या मानवसामान्यविषयया कोन्वत्र तस्या विषयीभूतः परिशिष्यताम् नैष दोषः यथोक्तव्यवस्थायास्तत्सामान्यमुद्दिश्यैवार्थवत्त्वात् यदि कश्चित्प्रकृष्टसंस्कारजन्मा सर्वस्मान्मुच्येत प्रमादात् तदप्यपवादवर्गीणं न शक्नुमोऽधिगंतुम् सुसूक्ष्मदृष्टीनामपि सूक्ष्मापराधदर्शनात्। नचैवं निरूप्यमाणे प्रमादिनां प्रमादतरताया अप्रमादिनां प्रमादिवर्गसंनिवेशस्य चोत्तेजनसम्भवात् प्रत्युतानर्थसमर्थनमेव पर्य्यवस्येदिति वाच्यम् प्रमादविषयस्वाभाविकप्रवृत्तिमात्रानुवादस्य विवक्षणीयत्वात्। नह्यनुवादो हानोपादानयोरर्थस्य विधायकः स्वभावाभावापत्तेः। नहि नद्यास्तीरे फलानि सन्तीति वाक्यं फलानामुत्पादनमन्यद्वा किञ्चिद्विधत्ते अपित्ववस्थानमेव तेषाम्। नह्यपवादवाक्यसन्दर्भेऽप्युत्सर्ग एव ध्रौव्यमभ्युपेयात् नहि मा हिंस्यात्सर्वभूतानीति वाक्यमग्नीषोमीयं पशुमालभेतेति विशेषशास्त्रापरपर्य्यायापवादवचनविशेषसमवधानेऽपि स्थायिभावमापद्यते तयोर्व्यवस्थानस्यैवोच्छेद्यत्वापत्तेः तदिदमुक्तं भवति निर्वापणीयतयाऽऽपन्ने प्रमादे नानिर्वापणविषयता तस्य कदाचित्संभवति नहि विषं मा भुंक्ष्वेति प्रयुक्तेऽपि तद्भोजनमेव शक्यग्रहमुत्तेजनास्पदमिति शिक्षितात्मा कश्चन ब्रूयात्। नहि बहुकृत्वो निगृह्यमाणा अपि तास्करीयाद्युत्कटापराधनिर्बद्धाः पुनः पुनस्तत्र तत्र प्रसक्ता एवेत्यपराधानामनवस्थापातः शासनशासित्रोर्युक्तचेष्टाविरहवत्त्वमित्यादयो व्यग्रप्रकारास्तथासति सम्भवेयुरिति साधीयः यावत्पापकर्म्मानुवर्त्तनं तावत्तत्कर्तॄणां यथापराधदण्डार्हतायाः "शंका चेदनुमास्त्येव नचेच्छङ्का कुतस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिर्म्मतः नचाऽशङ्का नचोत्तर"मिति शङ्कासमाधानयोरनवस्थापातप्रसङ्गनिर्म्मोचकस्य खण्डनकुसुमाञ्ज-

ल्युन्नीतन्यायातिशयस्य पर्य्यालोचनया निरतिशयाया रूढतरत्वात् न तत्र शासनशासित्रितिकर्त्तव्यताव्यग्रतावकाश इति । ननु "कामतः पतनीयेषु मरणाच्छुद्धिमृच्छति । हयमेधायनः शुद्धिः सार्वभौमस्य भूपतेः । कामतस्त्वनुपापेषु लोके न व्यवहार्य्यता । महत्सु चातिपापेषु प्रदीप्तं ज्वलनं विशे"दिति हारीतसंहितावचनाभिसन्धिमवधारयमाणैर्व्यवहार्य्यत्वाभाव एव द्वीपान्तरङ्गतानामुपपातकप्रसक्तिविवक्षयेति चेन्न "इति योगीश्वरेणोक्तमुपपापेषु तत्रतत् तस्मादकामतः पापं प्रायश्चित्तेन शुध्यती"त्युत्तरवचनादेव प्रायश्चित्तीयताऽर्हतोपपत्तेः—पाप्मन्यकामकृतत्वञ्च प्रवृत्तिविशिष्टान्यत्वं वैशिष्ट्यञ्च स्वविशिष्टनिश्चयविशिष्टत्वसम्बन्धेन निश्चये स्ववैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वविषयार्थनिष्ठवैधत्वावैधत्वान्यतरनिष्ठप्रकारतानिरूपितस्वविषयनिष्ठविशेष्यताकत्वोभयसम्बन्धेन निश्चयवैशिष्ट्यञ्च स्वानिरूपिततादृशान्यतरनिष्ठप्रकारतानिरूपितविशेष्यतावत्वसम्बन्धेनेति निष्कर्षः इत्थञ्च धर्म्मे विरोधविशेषास्पदीभूतसंव्यवहार्य्यताविवक्षयाऽसंव्यवहार्य्यतां न्याय्यतरां मन्यमाना अपि निजश्रेणीह्रासातिशयमनुपदमनुभूयमानसांसर्गिकनिमित्तेभ्यः प्रतिसन्दधानाः प्रत्युत तेषु वात्सल्योपनीतसंव्यवहार्य्यतामेव समस्तव्यवहाराकारपर्य्यवेक्षया स्वस्त्ययनैकनिदानतया न्याय्यतमां विजानन्तु प्रकृतिपरिषद्वरास्तावत्तराम् ।

यद्यपि धर्म्मः प्रियतमस्तथापि ततः क्वचित्कदाचिदेतन्निबन्धप्रसिद्धिप्रसाराभ्यां प्रागेव केवलं प्रच्युतिमापन्ना अप्यात्मीयतया तथात्वेनैव योजनीयाः विपर्य्ययेण लक्ष्यमाणा अप्यार्य्यसन्तानसमसत्तातोऽव्यावृत्तचराः कथंकारं स्वेभ्यः सर्वशो व्यावृत्तस्वरूपविशेषसमर्पणयोग्यानिगद्येरन् पराभ्योऽप्यशेषश्रेणीभ्यस्तद्वदेव व्यवकलनविशेषवत्तां विन्दमाना नोभयातिगामेव श्रेणीं कांचिद्धारयिष्यमाणा अप्यात्मीयतां कथञ्चिज्जह्युः नवा वयं जहाम आत्मीयतामेतावता तन्निष्ठाम् तदसावाभा-

ष्यतेऽभ्यनुज्ञायते च न्याय्यतया निजायां जातौ संव्यवहार्य्यता हि तेषामाचरितयथोपन्यस्तप्रायश्चित्तानामपुनःप्रवृत्तदुर्वृत्तानाञ्च चातुर्वर्णिकानामिति स्थितम्—येत्वसकृत्समुद्रसंयानद्वीपान्तरप्रयाणप्रसक्त्याऽतिलङ्घिताचारविचारप्रचारप्रबन्धसामान्याश्च मानवा न ते सर्वथैव व्यवहर्त्तव्याः सन्मार्गानुगामिभिर्जातौ जातीयैः परिषद्वरैश्च जातुचित् नवा ते क्वचिदपि निष्कृतिक्रियाभिः शुद्धिमृच्छन्ति नापि तास्वर्हतावा तेषामुपपद्यते अपरामृष्टेतिकर्त्तव्यताकत्वादजातानुतापत्वादप्रध्वस्तविहितार्थसाधारण्याच्च नान्यात्वेतस्यागतिर्य्यथाऽपराधमुपेक्षावर्ज्यमवकल्पत इति नात्र कश्चित्कौटुम्बिको वा जातीयो वा प्रशास्ता वा क्वचिदप्यपराध्यति यथावन्निरूपकतयेत्यवधेयम्—नानादेशीयमनीषिसामन्तादिपुरुतरप्रार्थनया प्रस्तुतविवादापनुत्तये विहितोऽयं निबन्ध आसेतोराहिमाद्रेराच प्राचीप्रतीचीमहार्णवाभ्यां चातुर्वर्ण्यचातुराश्रम्ययोरविगीतप्रवृत्तये सनातनवैदिकधर्म्मसंगुप्तये च भूयादिति शिवम्.

व्युत्पादितार्थसार्थं मञ्जुलमत्या विविच्य परमार्थम्।
धीरास्तु निर्विशङ्काः साराहाराश्च बोभवन्त्वनिशम् ॥ १ ॥

---

आदित्यवसुसोमै१८१२स्तु मिते भद्रे शके मुदा।
विकृतेः कार्तिके मासे द्वितीयस्यां भृगोर्दिने ॥ १ ॥
मालवे रत्नपुर्यां हि निबन्धो निरमाय्यसौ।
शिष्यसञ्चारशालिन्यां मया लोकार्थहेतवे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यवर्य्यपदवाक्यप्रमाणपारावारपारीणत्वाद्यनेकपदाङ्कितजगद्गुरुश्रीमच्छङ्कराचार्य्यश्रीशारदापीठद्वारकासंस्थानाधीश्वरश्रीमत्केशवाश्रमस्वामिदेशिकवरकरकमलसञ्जातजगद्गुरुश्रीमच्छङ्कराचार्यश्रीशारदापीठद्वारकासंस्थानाधीश्वरश्रीमद्राजराजेश्वरशङ्कराश्रमस्वामिविरचिता पर्य्यटनमीमांसा समाप्ता.

